॥ श्रीः ॥

# ॥ वेमभूपालचरितम् ॥

वामनभट्टबाणार्य

विरचितम्



श्रीरङ्गस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

समुद्रितम् ।

१९१०

# PREFACE.

EMABHUPALACHARITAM otherwise known as Veeranarayana Charitam is a welcome addition to the very small number of Prose Works that are extant in Sanskrit. It is the composition of Vamana Bhatta Bana who lived in the 15th century A. D. and treats of the exploits of the Reddi King Vema *alias* Veeranarayana, the son of Pedda Komateendra and Anantamba who ruled over the Trilingas. The plot of the story is simple enough and is summarised in the *Bhumika*. But it is couched in such elegant and flowing style as to make it pleasant reading. The felicity of expression, the force of style, the fullness of imagery and last though not least the wealth of observation enable us to conclude that the author had an extremely good command of the Sanskrit language which he used to the best advantage with his facile pen and that he was a keen observer of this world's ways. It is a pity that this fine prose work was not available to the Public till now. I was able to obtain two manuscripts of it, one from the Government Oriental Manuscripts Library, Madras and the other from the Tanjore Palace Library through the kindness of the late Junior Ranee of Tanjore. With the help of these two manuscripts the book was printed

fully when I came to know that there existed another manuscript copy of it in the Travancore Government Library Even at the risk of delaying the publication, I sent a copy of all the printed formes to Mr. T Ganapathi Sastriar, the curator of the Travancore Govt library and requested him to have these formes compared with the Manuscript available there and have the differences in the readings noted. He was kind enough to do so and I give below the more important of those readings, reserving the rest for a future edition.

| पुटः. | पङ्क्तिः. | आदरणीयपाठः. | पुटः. | पङ्क्तिः. | आदरणीयपाठः. |
|---|---|---|---|---|---|
| १२ | ३ | कलितरसालसत्त्वि० | ७८ | २ | बिन्दुष्विव स्फुरत्सु |
| १६ | ५ | वक्रिम० | ९४ | ७ | लिप्ताजिरासु कुसु० |
| २२ | १८ | कुण्डलित० | १०४ | १ | ०रजनिषताग्रय इव |
| २६ | ८ | दरविदलद० | १०६ | १५ | सुचरिते श्रुत० |
| २८ | १३ | आहूयमान | १०९ | १ | प्रस्नुत० |
| ३० | १४ | मुखररमणीय० | ११३ | १७ | विचकरुर्गन्ध० |
| ३७ | ७ | स्थितयो: | ११४ | १९ | पिञ्जरित० |
| ४० | ११ | राक्षसे | ११८ | १७ | सच्चक्रनन्दक: |
| ४४ | २ | ०मिवाङ्गुलीभिः | १२० | १ | प्रभानिशाशान्ति |
| ५३ | २० | ०यैकया भ्रू० | १३७ | १७ | विस्फुलिङ्ग० |
| ५६ | १२ | गगनमणि० | १४३ | ५ | वाचंयममानिनी० |
| ६३ | ६ | जडिमसु, सुभग० | १४३ | १२ | विविधायुधश्रम० |
| ७५ | ६ | भृशास्विन्नां | १४४ | ५ | तां श्रुत्वा |

| पुटः. | पङ्क्तिः. | आदरणीयपाठः | पुटः. | पङ्क्तिः. | आदरणीयपाठः. |
|---|---|---|---|---|---|
| १४८ | ७ | शोणित० | १८४ | १९ | मणिस्तम्भ० |
| १५४ | १७ | वृततूल० | १९७ | ६ | गृह्णती |
| १७७ | १४ | रवानुरणन० | १९७ | १० | ०परतया |
| १७८ | १७ | शोकापनुदे | २०३ | ९ | रतिकलाकलाप० |

The readers would no doubt perceive that the delay in the publication is more than compensated by the better readings obtained. I am sorry that none of these manuscripts helped me to fill up the gap found in page 179

The notes in the end prepared by Pandit R. V. Krishnamachariar will, I am sure, help towards the right understanding of some of the obscure passages in the text. In fine, my thanks are due to Mr R. Krishnamachariar M. A. Vidya Nidhi, for the valuable Sanskrit Bhumika.

*T. K. Balasubrahmanyam.*

॥ श्रीः ॥

# ॥ भूमिका ॥

---

सरसगद्यसरणिरमणीयेयमाख्यायिका पुरा ख्रिस्त्वब्दीयपञ्चदशशताब्द्याः प्रायः पूर्वार्धस्यादिमे भागे त्रिलिङ्गाननुशासितवतो वेमभूपस्यानितरसाधारणं वैभवमनुवर्णयितुमुपक्रान्तेन वत्सान्वयजलधिकौस्तुभेन कविना वामनबाणेन ग्रथितेति ज्ञायते ॥

सार्वभौमस्यास्य वंशानुचरितं कालनिर्णयादिकं च पार्वतीपरिणयनाटकस्य[1] भूमिकायां सोपपत्तिकं निरूपितमवगतपूर्वमेव काव्यानुवाचनकुतूहलिभिः पण्डितवरैरिति नात्र तद्विचारस्यावसरमनुपश्यामः ॥

कादम्बरीरचयितुर्नामधेयमात्रमित्रेणानेनैव कविना रूपकं तदुद्ग्रथितमिति कैश्चिद्धेतुभिर्निर्णीतं किल तस्यामेव भूमिकायाम् । कथासंघटनसंप्रदायो रसपुष्टिर्वर्णनाचातुर्यं वस्तुविन्यासादिविजृम्भणं वा न मनागप्यस्मिन्नाटके सहृदयहृदया-

---

1 Sri Vani Vila Sanskrit Series. N° 1.

ह्लादाय प्रभवतीत्यतो हेतोः प्राचो भट्टबाणस्य कृतित्वमस्य नाभ्युपगम्यते । परं तु वेमभूपालचरितस्य प्रणेत्रा वामनबाणेनैव रूपकमिदं विरचितं स्यात् , इत्याशङ्कितं पण्डितप्रकाण्डेन । ग्रन्थद्वयस्यापि केषुचिदंशेषु परस्परसंवादमन्तरा कथमिव तयोरेककर्तृकत्वं निश्चेतुं शक्यते ॥

श्रीमद्भट्टबाणयशसा व्याप्तमिदं वर्षमसहमानोऽयं कविः मधुरया गद्यसरण्या आस्वाद्येन वाग्गुम्भेन श्लाघनीयेन वर्णनकौशलेन हृदयावर्जकेनोत्प्रेक्षाशतेन च तमतिशयितुम-[1]भिलषन्निमामाख्यायिकामारचयितुमुपक्रान्तोऽपि तत्र तत्राजानान एव बाणमेवानुकुर्वन् 'बाणोच्छिष्टं जगत्सर्वम्' इत्यस्यैव दृष्टान्तायमानः आत्मनैव विरचितात् पार्वतीपरिणयग्रन्थान्न कमप्याशयमिह लेशतोऽपि निबध्नातीतीदं विस्मयमापादयत्यस्माकम् । कवेरस्यात्यन्तमभिमताः **वैजननवैभातिका**दिशब्दाः रूपके न कुत्रापि श्रूयन्ते ॥

यथैव प्राचीनो बाणः जनार्दनस्यावतारविशेषवैभवादिकं तत्र तत्र पौराणिकोक्तरीतिमवलम्ब्यान्तरान्तरा वर्णयन्नपि नीललोहित एवात्मनो निरतिशयां भक्तिमभिव्यञ्जयति ; तथैवा-

---

1. बाणादन्ये कवयः काणाः खलु सरसगद्यसरणीषु ।
 इति जगति रूढमयशो वामनबाणोऽपमार्ष्टि वत्सकुलः ॥

सावपि कविः नीलकण्ठस्य लोकोत्तरमनुत्तमं लीलाताण्डवाद्यपदानं तत्र तत्र वर्णयन्नपि नारायण एवात्मन आन्तरं भक्तिविशेषमवबोधयति । भवानीपतेर्भक्ताग्रेसरस्य नामधेयमावहंश्चित्रभानोस्तनयः भगवतः परमेष्ठिनः सत्यलोकवाससौभाग्यद्योतकमैतिह्यमादावनुध्यायति हर्षचरिते । लक्ष्मीपतेः पञ्चमावतारस्मारकेण नाम्ना आत्मानं पवित्रीकुर्वन् कोवटियज्वनः तनयोऽसौ कविरिन्दिरारमणस्य वैकुण्ठवासवैभवद्योतकमैतिह्यमादौ निर्दिशन्निमामाख्यायिकामारभते । [1]अमलमुक्ताशिलाघटितलिङ्गमशेषत्रिभुवनवन्दितचरणं चराचरगुरुं चतुर्मुखं भगवन्तं त्र्यम्बकमित्यादि भक्तिपरवशो गायति प्राचीनो बाणः । [2]साक्षान्नारायण इव सकललोकवन्द्ये, [3]क्रूरग्राहगृहीतगजपतिरक्षणक्षणाविर्भूतस्य गरुडध्वजस्येव सर्वलोकशरण्यत्वम्, [4]विश्वमिव नारायणमूर्तिः, इत्याद्यात्मनो भक्त्युन्मेषमाविष्करोति अभिनवबाणाबिरुदा समलंकृतोऽयं वामनाचार्यः ॥

[5]शरीरिणीमिव रुद्रोद्धूलनभूतिम्, गौरीमनःशुद्धिमिव कृतदेहपरिग्रहाम्, [6]जटापाशग्रथितमुत्तमाङ्गेन मणिमयं ना-

---

1. कादम्बरी (निर्णयसागर.) 257. 2. वेम. 90. 3. वेम. 40.
4. वेम. 112. 5. काद 259. 6. काद. 261.

माङ्कमीश्वरचरणद्वयमुद्वहन्तीम् , [1]त्रिपुरारिशरशलाकामिव तपोमयीम्, इत्याद्युद्गृणन् परममाहेश्वरः प्रतिपन्नपाशुपतव्रत इवालक्ष्यते भट्टबाणः । [2]वटदलशायिनं नारायणशिशुमिव हसन्तम्, निजपादाङ्गुष्ठगङ्गारसमास्वादयितुमाविष्कृतबाल-भावमिव पुण्डरीकाक्षस्य, [3]त्रैविक्रमविहरणविलासोदञ्चितच-रणतलरागरसरञ्जितवितानम्, इत्यनुध्यायतीव वासुदेवम-सौ कविर्वामनः ॥

[4]अतिविमलैर्वेदार्थैरिव साक्षात् पितामहमुखादाकृष्टैः गायत्रीवर्णैरिव प्रथनस्फीततामुपगतैर्नारायणनाभिपुण्डरी-कबीजैरिवोद्धृतैः सप्तर्षिभिरिव करस्पर्शपूतमात्मानमिच्छ-द्भिस्तारकारूपेणागतैः आमलकीफलस्थूलैर्मुक्ताफलैरुपचिते-नाक्षवलयेनाधिष्ठितकण्ठभागाम्, इत्याम्नायगिरामुपास्यत्वम-गजारमणस्य प्रतिपादयति प्राचीनो बाणः । [5]यस्य खलु भोजनकवलो भुवनानि, यन्नाभिपङ्केरुहशिशुर्ब्रह्मा, यत्पाद-पांसुपरमाणुर्भूतधात्री, यद्वपुषः स्वेदजाः कृमयो गीर्वाणाः, यन्मुखनिःश्वासमरुदङ्कुराः सप्त पवनाः, यच्चरणारविन्दमकर-न्दबिन्दुर्मन्दाकिनी, यद्ध्यानविश्रामभूमिर्मोक्षः, यद्भुजाप-दानभोगावली वेदाः, यत्तेजःस्फुलिङ्गाः पतङ्गशशाङ्काग्नयः,

---

1. काद. 265. 2. वेम. 115. 3. वेम. 175.
4. काद. 262. 5. वेम. 135, 136.

स खलु सनकसनन्दनादिभिर्मुनिभिरचार्मणेन चक्षुषा भाव्यमानमहिमा कविराम्नायगिरामखिलभुवनकूटस्थो गरुडकेतुरमुमधिशेते इति निगदन्ति निगमान्तगिर:, [1]उपनिषदुपवनतमालम्—इत्यादि विराट्पुरुषमहिमोपदेशप्रवण: नित्यसूरिपदमारुरुक्षतीवासौ कविर्वामनाचार्य: ।।

[2]स्नपनार्द्रलिङ्गसंक्रान्तप्रतिबिम्बतया अतिप्रबलभक्त्याराधितस्य हृदयमिव प्रविष्टां हरस्य, अनेकभावनानुविद्धया गीत्या देवं विरूपाक्षमुपवीणयन्तीम्, इति वर्णयन् महेश्वरे लयमधिजिगांसतीव भट्टबाण: । [3]सर्वभुवनमनाभिनाभये, छन्द:सन्दर्भकवये, प्रकृतिविकृतिबाह्याय, प्रत्यग्दृशामबाह्याय, निर्मलज्ञाननेदीयसे, निर्वाणपण्यविपणये, मनसोऽप्यविषयाय, वाचामप्यगोचराय; सुषुम्नापथपथिकाय, सकलजगदात्मम्भरये नमो हरये— इत्याद्युद्गृणन्, [4]शोणितपूरसन्तरदुल्बणजन्तुदेहां वैतरणीमुत्तीर्य नारायणस्य नित्यकिङ्करो भवितुमभिलषतीवासौ वासुदेवध्यानपरायणो वामन: ।।

[5]अभ्रगङ्गाभ्यागमवेगपतिताम् [6]अमरापगामिव नभसोवतीर्णाम्; [7]गगनसिन्धुफेनपटलपाण्डरस्य— इत्यादि नि-

---

1. वेम. 149. 2. काद. 264. 3, वेम. 150. 4. वेम. 139.
5. काद. 260. 6. काद, 265. 7. काद. 17.

र्दिशन् भट्टबाणः विष्णुपादसमुद्भवा मन्दाकिन्येव हरशिरसि पतितेति न कुत्रापि हृदयेनालिखति । वामनस्तु [1]विष्णुपदप्रवृत्ता कालभगीरथवशे वर्तमाना हंसधवला चन्द्रिकामन्दाकिनी गिरीशशिरसि निपत्य रसातलमवातरत्— इति कण्ठतः समुद्गिरति ॥

किं बहुनोपन्यासेन? कादम्बरीं प्रायेण रसपोषादिषु तत्समानजातीयामिमामाख्यायिकां ग्रन्थद्वयापेक्षया नितरां नीरसत्वेन परिगणितं पार्वतीपरिणयरूपकं च सुसूक्ष्ममनुविमृशताम्, गद्यकाव्ययोरनयो रूपकस्य च कुत्रापि हृदयंगमं संवादमपश्यताम्, प्राचीनबाणस्य परममाहेश्वरत्वं वामनस्यासाधारणीं विष्णुभक्तिं चावगच्छतामाधुनिकविमर्शकानां हृदये— तदिदं नाटकं न बाणेन, नाप्यनेन वामनेन विरचितं स्यात्, परमन्येन केनापि वामनाचार्येण निर्मितं स्यादित्याशयः समुदेति । सन्ति किल शतशो वामनास्तदा तदा समुद्भवन्तो विपुलायामस्यां धरण्याम् । सुष्ठूक्तं पण्डितवरेण— 'न किमपि स्पष्टं प्रमाणमुपलभमानाः केवलमभ्यूहपथेनैव सुदूरं संचरमाणा वास्तविकं विपरीतं वा किमपि निर्धारयन्तो बहुधा क्लिश्यन्ति विमर्शकाः'—इति ॥

---

1. वेम 172.

वेमभूपतिचरितलेखनव्याजेन आत्मनो गद्यग्रन्थकरणकौ-शलं प्रदर्शयितुमभिलषन्नसौ कविः नगरार्णवशैलर्तुचन्द्रार्को-दयादीन्यखिलानि च वर्णयन्नाख्यायिकायामस्यां महाकाव्य-लक्षणानि योजयन् रमणीयया वाग्धोरण्या सहृदयानानन्द-यन्नपि—पदविन्यासमाधुर्ये आशयाविष्करणगाम्भीर्ये स-रसालंकारयोजने विप्रलम्भशृङ्गाराद्यनुवर्णने अन्योन्यानुरा-गिणोः नायकयोः समुचितकथालापोपक्षेपसरणौ दूती-दूतसंप्रेषणव्यवहारानुशिक्षणे तत्तत्कालानुरोधेन समुचि-तोपदेशप्रदाननैपुण्ये दुर्विषहदुःखदुःखितानामाश्वासनप्रका-रवैखर्यां चानितरसाधारणं कौशलमावहतः अपरिमेयश-क्तिविद्योतिताद्भुतभारतीविलासस्य श्रीमतो भट्टबाणस्य नितरां न्यून इवालक्ष्यते ॥

सत्यमाख्यायिकाकारोऽयं ज्योतिःशास्त्रपाञ्चरात्रागमता-न्त्रिकग्रन्थेष्वप्यात्मनः सम्यग्विनयनमाविष्कुर्वन् शाक्तानां वेश्यानां च स्वरूपं हृदयंगमया वाग्धोरण्या वर्णयन् क्व-चित् क्वचिदक्षुण्णेनाचुम्बितेनाश्रुतपूर्वेणाश्चर्यजनकेन पथा संचरमाणः वाग्देव्या विलासमभिनन्दनीयमात्मनि प्रकाश-यति । अथापि ग्रन्थेऽस्मिन् निपुणं निरूप्यमाणे, कविरेष न केवलं बाणस्य, परं त्वन्येषामपि कवीनां सरणिमात्मनः कृ-तावसकृदाविष्करोति—

तथाहि— प्रोल्लभूपते: मृगयाप्रसङ्गेनारण्यानीं प्रविष्टस्य आशुगपथातिलङ्घिना हरिणेन सुदूरमाकर्षणम् , अनाघ्रातपूर्वस्याङ्गनाङ्गपरिमलमुद्वहत: पवमानस्याघ्राणम् , कर्णमधुस्यन्दिनो हिन्दोलगानस्य श्रवणम् , तदनुसारेण सकौतुकमभित: संचरतस्तस्य काञ्चनगौराङ्ग्या: विश्वविमोहनसौन्दर्यवत्या: कन्यकाया दर्शनमित्यादिकं— मृगयायां तुरङ्गमुखमिथुनमनुबध्नतश्चन्द्रापीडस्य दिव्यजनसंचरणप्रदेशाभिवीक्षणम् , अमानुषगीताकर्णनं मर्त्यदुर्लभदर्शनाया दिव्यकन्यकाया: समालोकनं चानुस्मारयति । तेनैवालोकितस्य कमलसरसो वर्णनमच्छोदस्य, आहवकोलाहलनामधेयस्य वारणेन्द्रस्य महिमानुकथनं [1]गन्धमादननाम्नो गन्धहस्तिन:, वेमभूपस्य दिग्विजयारम्भे ब्रह्माण्डकबलघस्मरस्य प्रयाणभेरीभाङ्कारस्य, [2]एकमहाभूतमयानीव सर्वाणि जगन्ति संतन्वतां रजसामनुवर्णनं चन्द्रापीडदिग्विजयारम्भोदितप्रयाणपटहस्य [3]एकमहाभूतमयमिव त्रैलोक्यमापादितवतो रेणुपरीवाहस्य च, विन्ध्याटवीन्यग्रोधचण्डिकालयादीनां स्वरूपोपपादनसरणि: विन्ध्याटवीशाल्मलीचण्डिकायतनादीनां च बाणभट्टस्यानुकुर्वन्ति ॥

---

1. काद. 179.  2. वेम. 129  3. काद. 234.

[1]त्रस्तैकहायनहरिणलोचना, [2]श्रीपर्वतश्चिन्तितासिद्धीनाम्, [3]कज्जलमलिनकपोललोलकपालकुण्डलाभि:, अन्तर्लुठदहिपरिवृढपातालबिलप्रतिमल्लमुल्लसितपृथुलजिह्वमास्यबिलं व्याददतीभि:, विकटकुचोत्सङ्गरङ्गताण्डवितभूरिपुरीतत्प्रोतचण्डनृमुण्डस्रग्भि:— इत्याद्यस्मिन् ग्रन्थे श्रूयमाणा वर्णावलि: श्रीमतो भवभूते: पद्धतिं स्मरणपथमुपनयति ॥

[4]अभिषेकजलाप्लवादिव सततमुपयान्ति जाड्यम्, प्रतापानलधूमोपरुद्धदृष्टय इव न दीर्घं पश्यन्ति— इत्यादिकमनुवाचयतामस्माकं चन्द्रापीडोपदेशप्रवृत्तस्यार्यशुकनासस्य वचनधोरणी हृदयगह्वरमापूरयति ॥

[5]नागनासोरूरित्यादिपदैरादिकविम ; [6]शङ्करगलकालीम्, [7]शर्वगलकालिमसवय:सु तम:सु इत्यादिभिराचार्यदण्डिनं च स्मृतिपथमारोपयन्नसौ कवि:—, [8]कनखल: कीर्तिगङ्गाया:, [9]निरन्तराश्रुप्रवाहमज्जनभीतेव नयनयोर्न भवति नेदीयसी निद्रा— इत्यादिभिर्मेघदूतम्, [10]कुङ्कुमरागशोणाम्— इत्यादिभि: श्यामलास्तवम्, मानुषीषु सृष्टिषु कथमियमुपपद्यते

---

1. वेम. 60  2. वेम. 120.  3. वेम. 183.
4. वेम. 131, 132  5. वेम. 67.  6 वेम. 59
7 वेम. 140. 8. वेम 104. 9. वेम. 84.  10. वेम 73.

रूपसंपत्तिः— इत्यादिभिरभिज्ञानशाकुन्तलं च स्मारयन्नपि कविसार्वभौमकृतिषु रघुवंशकाव्य एवात्मनो निरतिशयमास्वादमभिव्यञ्जयति । [1]महोरस्कौ, वृषस्कन्धौ, सालप्रांशू, [2]दिलीपचरितमिव श्लाघनीयसुदक्षिणम्, [3]आविष्कार इव रघोः, [4]वदनकान्ताविन्दुमती, [5]ध्रियमाणमिव लक्ष्म्या पुण्डरीकातपत्रमलक्ष्यत, [6]तृणबिन्दुरिव हरिणीमपातयदवनितले— इत्याद्युद्गिरन् असौ वामनः महाकविनोपवर्णितां रघोर्जैत्रयात्रां मनसि निधाय तामेव सरणिमुपादाय वेमभूपतेर्दिग्विजययात्रामतिमधुरमुपपादयति ॥

परं त्वनेन कविनोपवर्णिता जैत्रयात्रा निपुणं निरूप्यमाणा वर्षेऽस्मिन् तत्तद्राष्ट्रस्थितेरनभिज्ञतामेतस्याविष्करोतीति किंचिदिव विमनीभवन्ति देशावस्थितितत्त्वविदः । तद्यथा— साकेतान्निर्गतस्य रघोरङ्गवङ्गकलिङ्गादयः पौरस्त्या एव । अद्दङ्कयाः प्रस्थितवतो वेमभूपस्य तु त इमे उदीच्या भवन्ति । विशेषमिदमविज्ञाय कविरसौ 'पौरस्त्यानेवमाक्रामन् गङ्गासागरसंगमपुण्यतले कतिपयानि दिनान्युवास' इति वर्णयति । उत्कलाश्च न केवलं रघोः, वेमभूपस्य च मार्गदर्शका एवासन्निति अवबोधयन्निव दर्शितसर-

---

1. वेम. 117. 2. वेम. 13. 3. वेम. 102.
4. वेम. 106. 5. वेम. 113. 6. वेम. 23.

णिरुत्कलैराससाद संपदुत्तुङ्गानङ्गान् इति कथयति। मलयाद्रेः प्रतीच्यां दिशि घूर्जरान सौराष्ट्रान् पारसीकेष्वपरान्तमहीतलं च निर्दिशन्नपरमिव भारतवर्षं स्रष्टुमभिलषतीव ॥

किं बहुना—यथैव कविसार्वभौमः कालिदासः प्राचेतसेनाविष्कृतां पद्धतिं तत्र तत्रात्मनः कृतिष्वाविष्कुर्वन् 'स्वकृतिं गापयामास कविप्रथमपद्धतिम्' इत्यस्मिन् कविकोकिले निरतिशयं बहुमानं प्रदर्शयति, तथैव अनेनापि कविना भट्टबाणे कालिदासे चात्मनोऽन्यादृशं गौरवं कार्तज्ञ्यं चावश्यमभिव्यञ्जनीयमिति मन्यामहे ॥

अथास्यामाख्यायिकायामुपपादितं चरितं संग्रहेणेह विलिख्यते—

अस्ति त्रिलिङ्गेष्वद‍ङ्किनामधेया नगरी। तत्रैकदा नारायणचरणकमलसंभूते चतुर्थे वर्णे समुत्पन्नः कामाभिधानो नरपतिरशिषदशेषमवनिचक्रम्। तस्मात्प्रस्तुते महति वंशे शौर्योष्मसंतप्तसमस्तसामन्तचक्रः प्रोल्लभूपतिरुदभूत्। स हि कदाचिद्वसन्तसमये मृगयाक्षिप्तचेताः महारण्यं विगाह्याश्चर्यदर्शनेन हरिणेन सुदूरमाकृष्टः कंचन महनीयमाराममासदत्। तत्रानाघ्रातपूर्वमङ्गनाङ्गपरिमलमुद्वहन्तं पवमानमभ्यजिघ्रत्। तदनुसारेण विचरन् कस्मिंश्चिदुपवने बालतरुषण्डमध्ये सह-

कारपोताश्रितडोलायामुपविष्टां कलमधुरालापिनीं कांचित् कन्यकामद्राक्षीत् । दृष्टमात्रैव सा तस्य हृदयमविक्षत्, सोऽपि तस्याः । हन्त! परस्परदर्शनानुक्षणमेव राक्षसेन गले गृहीतस्य विदूषकस्याक्रन्दितमशनिमिव श्रवसि पातितमाकर्ण्य विस्मृतान्यकर्तव्यः तदुन्मोचनाय स भूपतिस्तस्मात् प्रदेशादन्यत्र सरभसमयासीत् ॥

अथ राक्षसात् विदूषकं मोचयित्वा पुनस्तमेवोद्देशमागत्य तां कन्यकामदृष्ट्वा विषण्णहृदयः सर्वतोऽन्विष्यानधिगततद्वार्तः मदनशरशरव्यतामुपयातः कृच्छ्रात् स्वपुराभिमुखं प्रास्थित । ततः प्रासादमेत्य प्रबलानङ्गवेदनाजर्जरितावयवः कथंकथमपि तां निशां गमयित्वा प्रत्यूषसि तदेव लीलोद्यानं गत्वा डोलाविहारदेशमुपेत्य तरुगुल्मेषु, कमलसरस्तीरेषु च विचरन् कस्यचित् कमनीयस्य लतामण्डपस्य मध्यभागे मदनपरवशायाः कस्याश्चित् दुःसहं देहसंतापमनक्षरमाविष्कुर्वतः शयनीयस्य सविधे आत्मनः प्रतिकृत्या समलंकृतं किमपि चित्रफलकमालोकिष्ट । तदवलोक्यातिभूमिं गतेन कन्दर्पज्वरेणास्तमितधृतिः अनुचरेण विदूषकेण समाश्वास्यमानः इतिकर्तव्यतामूढः दिष्ट्या तत्र यदृच्छागतया परिचारिकाद्वितीयया तस्याः सख्या निवेदितसर्ववृत्तान्तः आत्मनो निमित्ते अनुभूतानङ्गवेदनास-

ह्रस्वायास्तस्या: वरवर्णिन्या: शोचनीयां दशां श्रोतुमप्यशक्नुवन्, 'अयि! भद्रे! अविलम्बितमेव कन्यागुरुसमीपमहं जनं प्रेषयामि परिणयनप्रसङ्गाय' इति तां विसर्ज्य सह विदूषकेण स्वनगरमेव प्राविक्षत् ॥

अनन्तरं दक्षिणापथे विक्रमसिंहनगरीपालकस्य तुक्खारघट्टस्य भूपतेस्तनयां तां परिणेतुं त्वरमाण: आप्तैस्तस्यानुमतिमुपलभ्य तामेव पुरीमुपेत्य शुभे मुहूर्ते अनन्तानाम्न्यास्तस्या: पाणिं गृहीत्वा अनन्तां मुदमलब्ध । तयोरन्योन्यविभ्रमविलासावर्जितस्वान्तयोरुदभवन् माच, वेम, दोड्डु, अन्न, मल्लाभिधाना विख्यातयशस: पञ्च कुमारा: । तेषु ज्येष्ठान्माचनरेन्द्रात् रेड्डिप्रोतभूप इति पेद्दकोमटीन्द्र इति नागेन्द्र इति त्रिदशसदृशाह्वय: कुमारा अजनिषत । तेषु गुणज्येष्ठ: पेद्दकोमटीन्द्र एव राजराजप्रभावो भूत्वा अर्णवमेखलामिमां मेदिनीमशिषत् । स हि सौभाग्यतप:सिद्धिमिव स्थितामनन्ताम्बामुपायंस्त । अनन्तरमनधिगतसुतमुखावलोकनसुख: अमरपतिमर्चयित्वा वेमभूपं नाम वसूपमं ज्येष्ठं सुतं गुणैस्तमनुकुर्वन्तं चतुर्भुजप्रभावं माचभूपालं नाम द्वितीयं तनयं च प्राप्यानन्दतुन्दिलहृदयोऽभूत् । क्रमेण कृष्णेतरपक्षशशलाञ्छन इव वर्धमान: कलाभि: पूर्ण:

पित्र्यं सिंहासनमारुक्षद्धेमभूपालः । अनन्तरमागतायां शरदि दिग्विजययात्रां चिकीर्षन्नमितरथगजतुरगपादातैरतिमहतीं सेनां कर्षन्नुदचलत् ॥

प्रथममसौ सागरतीरमुपेत्य ततः कलिङ्गोत्कलाङ्गवङ्गभङ्गालान् विजित्य भागीरथीतीरे कृतसेनानिवेशः वेलातटेनैव दक्षिणां दिशं प्रस्थाय द्रविडानाक्रम्य काञ्चीमासाद्य पाण्ड्यान पराजित्य सेतुं साक्षात्कृत्य ताम्रपर्णीमवगाह्य केरलानुद्वीक्ष्य मुरचीं नदीमतिक्रम्य, मलयाद्रेरुपत्यकासु सुखमवात्सीत् कतिचन वासराणि । अथ प्रतीचीं दिशमालम्ब्य घूर्जरसौराष्ट्रानात्मनो वशं नीत्वा देवं सोमनाथमभ्यर्च्य चरमार्णवरोधसा पारसीकाभिमुखं गत्वा यवनानां शिरांसि निकृत्य अपरान्तमहीतलमाक्रम्य सिन्धुराजं समराङ्गणे परिभूय हूणान् काम्भोजान् काश्मीरानवनमय्य ग्रीष्मसमये गौरीगुरुं शैलमगात् । अनन्तरमनुभूतहिमालयोपान्तवनराजिसंचरणानन्दः सह सैनिकैस्तस्मादवरुह्य विन्ध्याटवीमवगाह्य चण्डिकालये भगवतीमादिभैरवीं तान्त्रिकेन विधिना संपूज्य द्राक्षारामपुरीमासाद्य भीमेश्वरं प्रणम्य वेशवाटीं केवलमवलोकनदानेनानुगृह्य वसिष्ठगौतमनिषेवितां भगवतीं गोदावरीमुपास्य निजपुरीमभ्येत्य ऐश्वर्यसंपूर्णमात्मभवनमासाद्यानि-

तरसुलभान् भोगाननुसेवमानः सरसकविकाव्यश्रवणभूषणेन कर्णावनुदिनमलंकुर्वन् परां कोटिमानन्दस्याध्यगच्छन् ॥

अत्यन्तमास्वाद्येषु गद्यकाव्येष्वेकतमां प्राचीनतालपत्रेषूत्कीर्णरूपां चिरादमुद्रितां वह्निभिर्भक्ष्यत्वेन निश्चितामिमामाख्यायिकां महता परिश्रमेण सम्यक् परिशोध्य रमणीयवेषोज्ज्वलां बहिरवतारयता श्रीमद्बालसुब्रह्मण्यार्येन सुबहूपकृतं देवभाषाभ्युदयकाङ्क्षिणामित्यमन्दमानन्दमुपलभामहे ॥

इति

सहृदयसमुदायदासः

**र. कृष्णमाचार्यः ।**

॥ श्रीः ॥

# ॥ वेमभूपालचरितम् ॥



सौभाग्यं जगतां यस्य वामे वपुषि वर्तते ।
तद्धाम शाश्वतं भूयाद्भूयसे श्रेयसे मम ॥ १ ॥

सहृदयदृष्टिः कुरुते
काव्यं त्वपदोषकरणगुणपूर्णम् ।
ज्वलदनलज्वालेव
क्षीरं व्यतिषङ्गितोयसंशोषात् ॥ २ ॥

आप इव जगति विमला
वाचो रसनीयतां दधति ।
काव्यप्रपञ्चसृष्टे-
र्या मूलं कविविधातृलोकस्य ॥ ३ ॥

काव्यं हि कविवराणां
कनकमिव श्लाघ्यवर्णसंकलितम् ।
दुर्जनजिह्वाज्वलने
तप्तं प्रविभाति निर्मलाकारम् ॥ ४ ॥

भुजगीव वमति गरलं
खलमुखवल्मीकवर्तिनी जिह्वा ।
कविवर्त्म दूषयन्ती
साध्या सा भवति सन्नरेन्द्रेण ॥ ५ ॥

बाणादन्ये कवयः
काणाः खलु सरसगद्यसरणीषु ।
इति जगति रूढमयशो
वामनबाणोऽपमार्ष्टि वत्सकुलः ॥ ६ ॥

कविरभिनवबाणः काव्यमत्यद्भुतार्थं
भुवनमहितभूमा नायको वेमभूपः ।
त्रिभुवनमहनीयख्यातिमानेष योगः
प्रकटयति न केषां पण्डितानां प्रहर्षम् ॥ ७ ॥

चूडामणिर्नृपाणां
दुर्मतिपरिपन्थिशिखरिदम्भोलिः ।
सर्वज्ञचक्रवर्ती
पेद्दकोमटिवेमभूपतिर्जयति ॥ ८ ॥

श्रूयते खल्वेतदैतिह्यम्—

पुरा किल सकलजगदात्मम्भरेः, सनकसनन्दनादिभिः सूरिभिः प्रत्यग्दृशा भाव्यमानमहिम्नः, छन्दःसंदर्भकवेः, सर्वभुवनसनाभिनाभेः, लोकशिल्पकल्पनाकृतोद्यमेन वेधसा प्रस्तूयमानेन नाभिनलिनमधुकररवस्फीतेन सामगीतेन मुखरितशेषपर्यङ्कपरिसरस्य भगवतो गरुडध्वजस्य, मन्दाकिनीप्रवाहमकरन्दस्यन्दात्, मुक्तिद्वारकवाटविघटनकुञ्चिकायमानस्मृतेः, लक्ष्मीकरकिसलयसंवाहनक्रियोचितात्, चिरजन्मकल्मषभुजङ्गविषभङ्गजाङ्गलिकात्, योगिजनमानसभवनमङ्गलदीपात्, श्रुतियुवतिचूडामणेः श्रीमतश्चरणकमलादवतीर्णो वर्णश्चतुर्थः— इति ॥

स खलु सहोदरोऽपि गङ्गाया जनकः कीर्तिगङ्गायाः, सह मिथुनभावेन स्वजायां चटुलहयखुरनखमुखविलिखितगात्रां गोत्रामधिकरणक्रमैर्वशीकुर्वन्, संक्रान्तहरिचरणलाञ्छन

इवातपत्रचामरतोमरधनुरसिभिरविरहितः, सुरापगया सोदर्यस्नेहदत्तानीव शुचित्वगाम्भीर्यपावनत्वमाधुर्याणि चरितमनःस्वभाववचनेषु समुद्वहन्, कलितकारणगुण इव संदर्शितमहिमा विक्रमेण बलिराजश्रियमाच्छिन्दन्, अप्रणतनरकपतनहेतुः, श्रितवतां श्रेयःप्रदानचिन्तामणिः, मणिरिव सतां हृदयेन धार्यमाणः, देवेन सह संक्रमय्य निजगुणमखिलमवनितलरक्षणार्थमाविर्भाविततया सौकर्येण धरणीतलोद्धारणं कुर्वन्, अभिमतहिरण्यकशिपुक्षेत्रप्रदानेन सुमनसः स्वस्थान्वितन्वन्, दाशरथिसरलशरप्रमुक्तिभिरनेकधालङ्कापतिखररिपुकबन्धपातिकर्म निर्माय समुज्ज्वलां धरणिसंभवां श्रियं स्वीकुर्वन्, सयौवनोन्मेषमधुराङ्गनानयनाञ्जलिपीयमानललितलावण्यनिष्यन्दः, क्षपितकुवलयापीडो बलेन सह विविधानि विरोधिविदलनानि विरचयन्, सर्वस्यां पृथिव्यां प्रथिमानमयासीत्॥

तत्र खलु समजनि पुरुहूतपुरूरवःपृथुभरतभगीरथदुष्यन्तदुन्धुमारप्रतिमः, पुरोगमः पुण्यश्लोकानाम्, अनेककुनृपतिचरितकल्मषनिर्वासनसर्वप्रायश्चित्तप्रतिनिधिरिव धरायाः, ज्वलन इव प्लुष्टदुष्टराजवंशः, पुण्यैर्निजचरितैः कलिमभिभूय सर्वदिशाकूलमुद्वहेन पुण्येन यशःपूरेण सुरभितदिगन्तः, निसर्गसंकटरोदोन्तरमान्तमुद्वहन्प्रतापम्, उग्ररिपुसमरविजयवे-

लाहेलाकृतेन सिंहनादेन दनुजाध्यक्षवक्षःस्थलदलनदक्षनृहर्य-क्षनिष्ठुरगलक्ष्वेलितमिव स्मारयन्, शतमख इवानेकपविक्रा-न्तिक्षपितभूभृत्पक्षः, विश्वामित्र इव सत्यव्रतस्थापनः, पवन इव कृशानुतेजनः, जनार्दन इव जगदवनमादधानः कामा-भिधानो नराधिपः ॥

यस्य खलु सलिलधरस्येव विमलतरवारिधारासारेण प्र-तिदिशमशाम्यन्त पार्थिवरजोभ्रान्तयः। यस्य च कुलगिरिग-रीयांसमंसमासाद्य, कोमलमृणालदुर्बलशेषशिरःपतनशङ्कातङ्क-ममुञ्चत भूतधात्री। यस्मिंश्च शासति महीम्, दैवजमपि न बभूव भयपञ्चकं प्राणिनाम् ॥

तेन खलु कामपालनिभेन कामभूपालेन विधिवदनुपा-लितो बभूव समधिककृष्णागोदावरीस्रोतःसमुदायनदीमातृका-यमाणः; समन्तादखण्डिताम्भःसमृद्धिभिः, विश्वंभराभ्रूलतानु-कारिसेतुलेखैः, तटतरुकुसुमान्तरक्षरदमन्दमकरन्दस्यन्दकन्द-लितकल्लोलैः, सलिलकेलिलोलकलहंसकामिनीकोलाहलानुकृत-जलदेवताचरणमणिनूपुरझणझणात्कारैः, कारण्डवपक्षविक्षेपप-रिचलितपङ्कजपरागपालिविरचितालीकसंध्यानुबन्धचकितच-क्रवाकयुगैः, स्तनंधयैरिव सागरराजस्य अनेकैस्तटाकैरुपशो-भितः; क्वचित्कलधौतशलाकिकानुकारिभिरङ्कुरद्भिः, क्वचि-

च्छुकपक्षश्यामलच्छविभिः कन्दलितैः, कचिच्चामीकरवर्णकर्णेजपैः परिणमद्भिः, पवनदरचालितकणिशतया परिसरविहारिकलमगोपिकाकलमधुरगीताकर्णनश्लाघाकम्पितमौलिभिरिवोपलक्ष्यमाणैः, फलभरविनम्रतया मूलपयःप्रतिबिम्बितां पश्यद्भिरिवात्मनः श्रियम्, शालिशारामुखषष्ठिकसुगन्धिकहायनप्रायैः सौराज्यसुखितवसुमतीपुलकनिकुरुम्बनिभैः केदारैरुपशोभितः; निरन्तरनालिकेरनिकरच्छदच्छायाच्छादिताशेषहरिदन्तरैः, पर्यन्तप्रक्रीडच्चिक्रोडदशनदष्टपरिणतपनसफलरसासारभरितसारणीसरणिभिः, प्रसृमरपाटलप्रसवपटलपाटलितपरिसरैः, सरलाशोकतिलकातिलकितैः, अविरलचलितकदलीदलाधिगतवनदेवताविलासतालवृन्ताकृतिभिः, सरससहकारशाखाशिखाधिरूढकोकिलकुलकोलाहलाकलितविरहिणीहृदयहालाहलक्षेपैः, मधुकरगञ्जायमानमाधवीनिकुञ्जखञ्जन्मिहिरकिरणपुञ्जैः, उद्भिन्नपुंनागकुसुमपरिमलोद्गारनिर्हारिभिः, उल्लसितचम्पककलिकाकलापकल्पितकन्दर्पपावकास्त्रसंपद्भिः, पाकपरिस्फुटितपुण्ड्रेक्षुपरुमुखोदीर्णमुक्तामणिकिरणदर्शिताकालराकानिशाप्रकाशैः, कोरकप्रकरतारकितकुरवकानोकहैः, वनितावदनासववासनासनाथवकुलवनैः, महिलाकुचकान्तिचोरलिकुचफलैः, मातुलुङ्गामोदहृदयंगमैः, नवनारङ्गसङ्गिभिः, भुजङ्गलतापरिष्वङ्गधन्यतरुणपूगभद्रैः, ललितलव-

लीलतालिङ्गितलवङ्गैः, ह्रीबेरहारिभिः, ह्रीतहारीतभरितहरितहरिद्रादलैः, प्रच्छायोपचितशृङ्गिबेरपरिपाटिभिः, पक्ष्मलितसूरणैः, प्रतिनवजातिजीरकराजिभिः, कुटिलशुकत्रोटिकोटिपाटितदाडिमस्तोमैः, व्याकोशकोशातकीगुलुच्छसंचयसंछन्नवृतिभिः, उद्वेल्लत्कारवेल्लवल्लीवलयैः, पटुतरपटोलपरिणाहैः, कोमलालाबुशालिभिः, पुष्यत्पुष्पलतैः, उरुतरोर्वारुकनिगदितोर्वरासारैः, अभ्यर्हितबार्हताभ्युदयैः, अखिलभुवनाभिरामैरारामैः सुलभरामणीयकातिशयः ; सततविहितहालिकहृदयहेलनैः, सस्यपरिपालनपरायणानेकसैरिकदारिकाकलितकोलाहलाकुलितविहगकुलैः, अदूषितोन्मेषमाषकोरदूषकैः, श्यामलश्यामाकसंहतिभिः, अभिनवपाकबहुवारकैः, समुद्गतमुद्गसामग्र्यैः, अनणकचणकचणैः, सैरिककुटुम्बिनीसादरालोकितबादरोदयैः, मसृणमसूरस्थलैः, सुस्थितकुलुत्थर्द्धिभिः, प्रसिद्धसिद्धार्थैः, निबिडनिष्पावनिष्पत्तिभिः, निबिरीसातसीकैः, अनूनतैलीनसीमभिः, प्रवर्धमानवर्धमानवनैः, दाशरथिचरितैरिव सीतानुवृत्तिसरलैः, बलभद्रविलसितैरिव लाङ्गलासङ्गिभिर्जाङ्गलक्षेत्रैर्विचित्रपर्यन्तः; समुत्तम्भिततुङ्गयूपस्तम्भनिवहसूचितविविधाध्वराहरणैः, श्रुतिकामिनीकण्ठकालागरुद्रवायमाणहोमधूमलेखानिकायप्रकाशिताकालकालिकानिर्मिताधर्मधर्मविलयैः, प्रशस्तवास्तुविन्यासैः, प्रत्यग्भागप्रतिष्ठापितेन च गोपुरोपरिदेश-

डोलायमानविशङ्कटगारुडवैजयन्तिकेन पुरतः समुच्छ्रितोदग्र-दीपदण्डेन प्राक्द्वारवेदिकाद्वयभित्तिपुटविलिखितदशावतारवृत्तान्तेन कुण्डलितभुजङ्गराजभोगशङ्काकारप्राकारपरिवेषशोभिना पुरुषसूक्तव्याहरणपरपटुतरवैखानसाधिष्ठितेन तुलसीदलशीतलामोदमुषितकिल्बिषेण विष्वक्सेनायतनेन, ऐशान्यां च दिशि दर्शितोन्नतिना गर्भगृहगवाक्षविवरोद्भ्रान्तगुग्गुलुधूपापदेशप्रकाशितपरमेश्वरकण्ठकालकूटकालिम्ना स्थूलशिलाघटितसालवलयेन पवनरयकम्पितध्वजपटपल्लवाङ्गुलिभिः प्रमार्जयन्तीभिरिव कलिकालकालुष्यम् अवतरणरभसशीर्णस्वर्णदीस्रोतःशकलानुकारिणीभिरतिनिर्मलाभिः पुंगवपताकाभिर्विनयतेव संसारजनितां जूर्तिमखिलजन्तूनां द्वारदेशावलम्बमानमालूरतोरणस्रजा रक्तकरवीरकुसुमालंकृतबलिपीठेन स्निग्धश्यामलशिलोत्कीर्णशंकरौपवाह्यशाक्वरेण सरसारग्वधसौरभासारवासितदिशा विकटोपलस्तम्भविरचितनन्दिमहाकालभृङ्गिरिटिनिकुम्भकुम्भोदरप्रमुखप्रमथगणाकृतिवैकृतभयंकरेण संनिहितकार्तिकेयहेरम्बमूलबेरेण भासुरभस्मत्रिपुण्ड्रकैर्भद्ररुद्राक्षमालिकाधारिभिरुच्चारितरुद्रैकादशीयैः द्विजन्मभिरधिष्ठिताभ्यन्तरेण आपूर्यमाणशङ्खबहुलकाहलमृदङ्गकलकलेन शिवालयेन च अलंकृतैः, प्रतिभवनवेदिकोद्देशं क्वचिद्बालतया विनीयमानेन क्वचिद्वयःस्थतया शास्त्राण्यन्योन्य-

मालोचयता क्वचिद्वार्धकान् विद्यासुखेषु विश्राम्यता केनचिदुच्चारितर्चेन, केनचिदाम्रेडितयजुराम्नायेन केनचिदविगीतसामगीतिना, केनचिदाथर्वणतन्त्रमवमृशता केनचिच्छन्दोविचितिस्वच्छन्दवृत्तिना केनचिच्छिक्षितशिक्षाक्रमेण केनचिन्निरुक्तव्यक्तवैदुष्येण केनचित्कल्पितानल्पकल्पशिल्पसंजल्पेन, केनचिद्व्याकृतिनिराकृतश्रौतसंशीतिना केनचिद्द्योतमानज्योतिषज्योतिरपरोक्षितत्रैकाल्येन, केनचिदुद्धट्टितभट्टभणितिप्रघट्टेन केनचित्प्रभाकरालापलीलापरायणेन केनचिद्वेदान्तोदन्तनिर्वृतस्वान्तेन केनचिद्वैशेषिकमतोन्मिषितशेमुषीकेण केनचिन्नैयायिकवचनशय्यानुयायिना केनचिदितिहासदृष्टपुण्यश्लोकपूर्वराजर्षिचरितेन केनचिद्धर्मशास्त्रमर्मवेदिना केनचिच्छीलितशिवागमेन केनचिदुदञ्चितपाञ्चरात्रसमयप्रपञ्चेन केनचित्प्रख्यापितसांख्यसिद्धान्तेन केनचित्क्षपणकदर्शनक्षपणप्रचण्डपाण्डित्येन, केनचिच्चार्वाकगर्वनिर्वापकाखर्वसर्वज्ञतोत्कर्षेण केनचित्साहित्यरससौहित्यशालिना पञ्चमहायज्ञतत्परेणानूचानेन ब्राह्मणगणेन परिष्क्रियमाणैः, आवापक्षेत्रैरिव सुकृतबीजानाम्, आलवालैरिव श्रुतिलतानाम्, आवासपेटकैरिव सत्पुरुषरत्नानाम्, आघातस्थानैरिव दुरितदस्यूनाम्, आभरणैरिव वसुधाविलासिन्याः, महद्भिरग्रहारैर्मनोहरः; स्यन्दन इव उर्वरासङ्गदर्शनीयः, जल-

धर इव निरवधिकासारदर्शितोच्छ्रायः, सज्जन इव अनेकधान्योपकरणसंभृतप्रीतिः, अभिजात इव समग्रगुणग्राममण्डनः, प्राज्ञ इव बहुलोहप्रभवभूमहितः, जम्बूद्वीप इव भद्राश्वभूषितः, यूथपतिरिव असंख्यधेनुकानुगतः, समुपचितसकलधर्मलिङ्गस्त्रिलिङ्गो नाम जनपदः ॥

यत्र गोदावरीकूलबहुलपङ्कनिमग्नचरण इवानन्यगतिरावासकर्म निर्माति धर्मः। यत्र च कृष्णवेणीतरङ्गकलकलोद्वेजितानीव दूरीभवन्ति दुष्कृतानि । तत्र खलु तस्य राज्ञो राजधानीबभूव समस्तभुवनप्रशस्तरामणीयका फलसंपदिव भारतवर्षशाखिनः; शाखानगरसहस्रसंबाधपरिसरा; सर्वभुवननिर्माणमातृकेव विश्वसृजः; जननीव कृतयुगस्य; निजनृपतिनिरतिशययशःप्रतापप्रसरनिरोधापराधबन्दीकृतेनेव चक्रवालगिरिणा महता प्राकारवलयेन परिवृता; सदातनसलिलभरभरितेन, सलिलसंक्रान्तकनकवरणमण्डलप्रतिबिम्बतया कुलिशपतनभयादपरजलनिधिशङ्कावगाढकनकगिरिणेव विराजमानेन, पर्यन्तविसर्पिबहुलफेनपटलापदेशादगस्त्यकरचुलकितमम्बुराशिमिव अपहसता परिखाचक्रेण परिगता; क्रीडागजमदजलसेकपङ्किलप्राङ्कणैः, कुट्टिमखचितमरकतमणिकिरणविसरणजनिताकाण्डप्रसारितकदलीपलाशसंशीतिभिः, कालागरुधूप-

पालिकादर्शितालीककालिकालोकनत्रस्यत्केलिमरालिकायूथैः, आसन्नदीर्घिकावीचीपवनविकीर्यमाणविकस्वरनालीकशीथुवर्ष-जम्बालीकृतशम्भलीकपोलकस्तूरिकापत्रपङ्क्तिभिः, अभ्रंलिहके-तनशिखरोल्लेखनभिदुरमुदिरोदरशीर्यमाणवार्यासारपूर्यमाणसौधमणिप्रणालीझलज्झलात्कारोद्विग्नपारावतरणितशतगुणितवर-युवतिमणितभणितिभिः, गारुत्मतरत्नांशुपटलघटितकपटया-मिनीतारकायमाणस्थलखचितस्थूलमुक्तामणिभिः, अनवद्ययो-षाङ्गभूषानिवहेन्द्रनीलमणिप्रभापोषदोषायमाणवासरैः, कृष्ण-क्रीडितैरिव सर्वदाररचितरुचिभिः, ललनावलग्नैरिव ललित-वलीकान्तैर्भवननिवहैर्निरन्तरा; संफुल्लवल्लितरुतल्लजपुष्पनिष्प-न्दनिलीयमानपुष्पंधयविरुतिभरितहरिता, फलिनहलिना, फ-लेग्रहितालेन, पत्रलहिन्तालेन, त्रिचतुरदिवसोद्गतकोमलकि-सलयाग्रग्रसनसहर्षपिकपरिषदध्युषितचूतविटपिना, विसृमर-शुकपरिपाटिकाकुटिलसृपाटिकाकोटिपाटितफलपूरफलेन, अ-क्षुद्राक्षद्राक्षारुद्राक्षेण, विकचविचकिलधूलीसुरभिणा, पचेलिम-क्रमुककुहलीपालीप्रणालीपुटपतितबहुलमधूलीसमुक्षितक्षितिना, तरुणमरिचवल्लीवेल्लितबिल्ववलयेन, प्रक्रीडच्चिक्रोडशिशुचरण-शीर्यमाणशीफरशेफालिकारजसा, नवतरुकुसुममधुझरीसौर-भजरीगृह्यमाणजनहृदयेन, निरन्तरसुमनःस्यन्दिमकरन्दव-र्षपिच्छिलतलस्खलितपुष्पलावीजनेन, संसारेणेव सगन्ध-

सारेण, वेशवाटेनेव प्रकटितविटपालिना, हिमवतेव महादेवबल्लभोत्पत्तिहेतुना, सेतुनेव अधिकपिकाचितेन, सदसेव सदा वलीमुखरतानुकूलेन, नलेनेव कलितरसातलत्विषा, तरुणीमुखेनेव चलद्भ्रमरकान्तेन, जरठवपुषेव अविरलतिलकद्रुणा, रावणेनेव बहुलपनसाहितेन, समधिगतमहापुरुषेण तालाङ्केन, स्थगितनभसा घनेन, महनीयकृष्णागुरुणा द्रुपदेन, विदलितनागेन केसरिणा, प्रवृद्धवयसाप्यरहितगणिकाश्लेषेण, नमेरुधरेणापि सुमनोगणनिलयेन, सर्वभुवनाभिरामेण आरामनिकरेण कल्पितसौभाग्यविशेषा; नवदलितमृदुलनलिनदलतलिमतलरिरंसुहंससंसदालापरमणीयैः, कोमलकिञ्जल्कशल्कजिघ्रासिषाव्यग्रचक्रवाकचरणवलयवेल्लितकुवलयापीडैः, पृथुलहरिशिखरटीकमानमदविकटवरटामुखविघटितवराटककोशैः, व्याकोशशतपत्रातपत्रच्छायानिषण्णराजहंसमण्डलैः, प्रत्यग्रफुल्लहल्लकवनीघनीभूतमधुधुनीस्रोतःसन्ततिकन्दलितोर्मिभिः, मदकलकलहंसतुण्डखण्डनोच्चलितकुमुदपरागसुरभिताम्बुभिः, लक्ष्मणमनोवृत्तैरिव ऊर्मिलासहितैः, संसारिभिरिवालजम्बालमुद्वहद्भिः, सुनटैरिवानेकशस्तरङ्गनर्तितैः, यतिभिरिव अधिकमठस्थितिभिः, अगाधैः सरोवरशतैः सनाथीकृतसंनिवेशा; बिल्वखदिररोहितकपलाशमयैः अशुष्कैः, अशाखान्तरैः अकीटदष्टैः अतिनिपुणत्वक्ष्टृतष्टैः अष्टाश्रिभिः

कलितबलिकलिक्षेपैर्यूपैरुद्भासितम्, सहजसौमनस्यसदस्यप्रश-
स्यमानतन्त्रसौष्ठवम्, तरुणहरिणचर्मनिर्मितपवित्रधवित्रम्,
कदाचिन्नव्यं वायव्यं भव्यं द्यावापृथिव्यं च हव्यं जुह्वता कदा-
चित्प्रशस्यानुषस्यान पवित्रान् अपोनप्त्रीयान्मन्त्रानधीयानेन
कदाचिदनपसव्यानि ऋतव्यानि यजूंषि पठता कदाचिदा-
ग्निमारुतं कर्म निर्मिमाणेन याजकगणेन परिष्क्रियमा-
णम्, भारतसमरमिव प्रकटितधनंजयहेतिवीर्यम्, दिलीप-
चरितमिव श्लाघनीयसुदक्षिणम्, रणाङ्गणमिव बहुविधशस्त्र-
संकुलम्, सुरबलमिव स्तूयमानसुब्रह्मण्यम्, गान्धर्वमिव
श्रूयमाणश्रुतिस्वरमण्डलम्, हास्तिकमिव बहुशस्तोत्रसम-
न्वितम्, उत्पातरविमण्डलमिव उपहितपरिधिबन्धम्, उत्तान-
पादचरितमिव उपलभ्यमानध्रुवाकारम्, राहुवदनमिव अस-
कृदाहितसोमग्रहम् ,अम्बिकारमणमिव कपालभूषणम् अध्वरश-
तमाहरताम् आमुष्यायणानामनवकीर्णिनामनिराकृतानामलि-
ङ्गवृत्तीनामनभ्युदितानामनभिनिर्मुक्तानां गृहमेधिनां द्विजानां
निवासभूता; चिकुरतिमिरासङ्गमङ्गलनिशया, ललाटश-
शिकलाविलासप्रतिपदा, भ्रूलतालासिकालास्यललितरङ्गभुवा,
नयनशफरानुबन्धनवकन्दर्पपताकया, अधरबन्धूकविकास-
विभ्रमशरदा, कण्ठकम्बुकमनीयबिब्वोकसरिता, स्तनचक्रवा-
कयुगानुषङ्गशृङ्गारदीर्घिकया, रोमावलीजलदलेखादर्शनाश्चर्य-

प्रावृषा, करपल्लवस्फुरणपर्यायवीरुधा, पन्नगपरिषदेव प्रकटि-
तविलासया, मन्मथलीलयेव रतिसुखसंपादनचतुरया, कुमु-
दिन्येव राजानुकूलदर्शनया, केशभरे कृष्णया, वदने मनोर-
मया, वचसि मञ्जुभाषया, मध्यदेशे मन्दोदर्या, ऊरुयुगले
रम्भया, भूषासु रुक्मिण्या, सुरतकलासु सुदक्षिणया, वपु-
षि सुभद्रया वारविलासिनीसंहत्या समलंकृता; क्वचिदञ्चिता-
भिरिव कालागरुधूपमण्डलैः, क्वचित्सिकितिलाभिरिव कर्पू-
रपांसुभिः, क्वचिच्छर्करिलाभिरिव मुक्ताफलराशिभिः, क्व-
चित्पल्लविताभिरिव पद्मरागमहःपटलैः, क्वचिच्छाड्वलिताभि-
रिव शतमखमणिकिरणापीडैः, क्वचिद्रसातललक्ष्मीभिरिव
अनन्तशङ्खकुलसंकुलाभिः, क्वचिन्मधुमासवनराजिभिरिव प्र-
वालहारिणीभिः, क्वचिद्विषहरणविद्याभिरिव गारुडालोकप्रसा-
धिताभिर्महाविपणिवीथीभिर्विराजिता; सरसहरिणलोचनापाङ्ग-
वलनमेचकितान्तरा विहारवनभूमिरिव कन्दर्पकरेणोः; उत्तुङ्ग-
मत्तवारणसहस्ररमणीया विलासास्थानमण्टपिकेव वीरल-
क्ष्म्याः; श्रुतिसुखालापमुखरशुचितरद्विजवरमण्डलानुबध्यमान-
पद्मासना केलिसरसीव सरस्वतीकलहंसिकायाः; दलितसम-
दकरिसहस्रैः ससिंहसंहतिरिव महावीरैः; समधिकवि-
तरणलीलारसिकैः सपारिजातवनेव वदान्यैः; अनेकशतस-
वनसमज्याविहारिभिः ससुधर्मेव सुमनोभिः; अभिदर्शितचा-

रुवर्णास्थितिस्तिलकश्रीरिव त्रिलोक्याः; समुद्भासितासंख्य-देवालया छायेव शतमखनगरस्य; अक्षयजीवनधृतिरालवाल-मण्डलीव धर्मतरोः; अनेकधामालंकृता निवासभूमिरिव कृत-युगस्य; अनधिगतकण्टकरुचिरा घण्टासरणिरिव प्रजाभा-ग्यस्य; प्रचुरसन्मणिवासा नीवीव वसुंधरायाः; गुह्यकन-गरीव विविधमनुष्यधर्मचरितपवित्रा; लङ्केव पुण्यजनाध्युषि-तसंनिवेशा; शब्दविद्येव बहुधा तुरङ्गशोभिता; कार्तवीर्य-तनुरिव अविरलकरभासिता; नृसिंहलीलेव प्रथितहिरण्यक्षया; शरदिव विलसत्सत्प्रकाशा; ब्राह्मणजातिरिव निगमशालिनी; महाघोषान्वितापि निराक्रोशा; प्रकटभुजङ्गप्रचाराप्यपोहिता-हिभया; बलिराजनिलयभूतापि गन्धर्वभूमिः; अद्वाङ्किनाम-धेया नगरी ॥

यत्र च वामभ्रुवामनुपमललाटतटकान्तिकदर्थनलज्जया मज्जनमिवाचरति शङ्करकोटीरशैवालिनीपयसि चन्द्रमःशक-लम्। यत्र च मुनीनामपि मनांसि मोहयति कुण्डलितकुसु-मास्त्रसशरशरासनविभ्रमं बिभ्रदक्षिभ्रुवं सुभ्रुवाम्। यत्र च पुनरम्बुधरकदम्बकम्, अमृतकरबिम्बम्, अम्बुरुहम्, अमृ-तम्, कम्बुः, इभकुम्भः, चम्पकदाम, अम्बरम्, अम्बु-निधिपुलिनम्, रम्भा, अशोकपल्लवमित्येतानि शम्बरारिपुसा-

चिव्यकलनाय ललनारूपेण परिणमन्ति । यत्र च हरिणीदृशामाननचन्द्रमण्डलेष्वभ्यर्णकर्णपाशगाढनहनशङ्कासंकुल इव न कदापि निविशते लाञ्छनहरिणः । यत्र च चञ्चलदृशामञ्चलस्फुरणमेव दृशोः पञ्चशरी पञ्चबाणस्य; पुष्पाणीति मृषोद्या किंवदन्ती । विक्रमप्रणयिनी भ्रूलतिकैव समरसाचिव्यकार्मणं कार्मुकम्; इक्षुरित्यलक्ष्यमाख्यानम् । निसर्गसुरभिर्निश्वास एव रागोद्दीपनसाधनम्; मलयपवन इति चिन्ताव्यामोहः । छायाकरं चन्दनतिलकमेव धवलातपत्रम्; चन्द्रमण्डलमिति कविकर्मधर्म. ॥

तस्यां च पुरि निवसन्, पुरंदरप्रतिमः, पूरितार्थिजनकामः, कामनृपतिरेकनगरनिर्विशेषमशिषदशेषमवनिचक्रम् ॥

तस्माच्च मार्ताण्डादिव मानवो वंशः, चन्द्रमस इव पौरवः सन्तानः प्रवर्धमानः, मन्दाकिनीप्रवाह इव मधुमथनचरणप्रवृत्तः, महार्णव इव अनेकवाहिनीकलकलसनाथः, मन्दर इव श्रीसमुत्थानहेतुः, चन्द्र इव परमेश्वरशिरोलालितः, प्रससार महीतले महान्वंशः ॥

तत्र च बभूव क्रमेण मान्धातृभरतपृथुभगीरथदुष्यन्तदुन्धुमारदशरथदिलीपप्रतिमः, गान्धारगन्धसिन्धुरसृणिः, मालवकुलापमृत्युः, गुर्जरज्वरः, सिन्धुराजराजयक्ष्मा, वङ्ग-

हृदयशङ्कुः, उत्कलकुलोल्कानलः, कामरूपपतिधूमकेतुः, मद्रबलसमुद्रौर्वः, शकवनशिखी, हैहयहिमानीरविः, सोमकसोमस्वर्भानुः, मागधवधूवैधव्यदुर्विधिः, दुर्मदतुलुष्कशुष्काशनिः, लाटकर्णाटरणरणकः, भोजकाम्बोजप्रजागरो राजा प्रोल्लभूपतिर्नाम ॥

यस्य खलु निरन्तरनिर्गतानि विमतवधूबाष्पधाराजलानि वर्षति कृपाणमेघे, महती बभूव वंशवृद्धिः । यस्य च रिपुरुधिरसरसहरिचन्दनचर्चाकरणशिशिरोपचारपौनःपुन्येनापि न शशाम शौर्योष्मा ॥

स खलु बाल एव राजा रजनिकरकरावदातकीर्तिर्दिग्गजकरद्राघीयसा भुजेनाङ्गदमकरिकानिर्विशेषमधारयदष्टादशद्वीपवतीं वसुमतीम् ॥

तस्मिंश्च राजनि शासति चतुरर्णवमेखलां वसुंधराम्, कदाचित्कोमलमलयमारुतान्दोलिततरुणसहकारकोरकास्वादकषायकण्ठकलकण्ठकामिनीगलगुहाङ्कुरितसरसकुहूकोलाहलः मधुमदमुदितरमणीरमणीयवदनमधुगण्डूषसेकपुलकितबालवकुलवाटिकाभिरामः, मधुमदचपलमधुकरचरणताडनोद्धूततरुणदाडिमप्रसवधूलीपालीसूचितालीकसंध्याबन्धः, विरहिजनप्रहरणविजृम्भमाणमकरध्वजभुजनमितधनुष्टङ्कारतरङ्गितरोदो-

न्तरः, तारुण्याम्रेडितलावण्यललनाचटुलतुलाकोटिवाचालचरणारविन्दमन्दप्रहारकेलिकिसलयितकङ्केलिपादपः, दक्षिणसमीरणतरलितमृदुलचम्पकलताडोलाधिरूढवनदेवतागीयमानमधुरगीतिकुड्मलितबालप्रियालवनवाटः, पटुतरक्रमं कोकिलान् पञ्चमश्रुतिमध्यापयन्, मकरन्दवारिधोरणीर्माधवीषु कुसुममञ्जरीः कलयन्, मलयगिरिकटकादवतारयन्नेवामोदमेदस्विनो मरुतः, प्रालेयरुजः कमलवनलक्ष्मीमुल्लाघयन्, सुतनुसुरतनाटिकासूत्रधारः, मधुकरमधुपानगोष्ठीप्रवर्तनमहाशाक्तः, तुहिनतुषवर्षावग्रहः, वासरायुष्यवैद्यः प्रादुरासीद्वसन्तसमयः ॥

मधुसमयधातुवादी मलयगिरिभस्त्रिकामरुता समुल्लसितपल्लवाग्निषु विविधौषधिवहासु वनगुहासु दर्शयामास भासमानवर्णानि सुवर्णानि । विरहिजनहरिणजिघांसया विनिर्यतो वीरस्य मनासिशयमृगयुराजस्य स्कन्धावारधुरंधरेण गन्धसारगिरिगन्धवहेन प्रतिदिनं प्रचक्रिरे परागरेखावागुराः । संजज्ञिरे च पञ्चमरवमुखरमुखपरभृतयुवतिसरसरतिकलहसहकाराः सहकाराः । अभासि च पुनरयुगविशिखवीराहतपथिकयुवतिहृदयविगलदविरलरुधिरानिचितवदनैरिव बाणैः, वसन्तलक्ष्मीमणिप्रदीपायमानदलांशुकैः किंशुकैः । कस्य वा न बबन्धुरन्तःकरणं कुम्भसंभवकुटुम्बिनीकुन्तलभरगन्धबन्धवो ग-

न्धवहाः । चिरविगतार्तवविकासतया विरसासु रागिणोऽपि गणिकासु सङ्गमङ्गीचक्रुर्नवपल्लवाः ॥

तस्मिंश्च विकस्वरपिकस्वरे, पथिकहृदयमाथिनि, मधुरमधूकमधुमाद्यन्मधुलिहि, मदनबलगर्वसर्वधुरीणे, मन्दकुन्दमकरन्दस्रोतसि, मधुकरमलिनमाधवीस्तबके, कोमलकुड्मलालंकृतवकुले, विरतहसन्तिकायूथे, दुर्निरूपतुषारवर्षमुषि, कुशलकुशेशयसंसदि, कुसुमपरागोत्किरकुरवके, मरुवकसुहृदि, रिरंसाकुलकलहंसालापसारकासारे, मलयानिलवैजनने, स्मरनिगमप्रवर्तनाध्यायतिथौ, चामीकरवर्णकर्णेजपकर्णिकारहारिणि, जनितवारुणीतृषि, अशोकशोकापनुदे, सरसकिसलयापीडचूडालचूतविटपिनि, सुरभिगन्धगन्धफलीचारुचाम्पेयसंपदि, नवसुमनःस्मेरनमेरुवने, विगतफलिनीविकासे, रुधिरारुणशार्दूलनखकुटिलकिंशुककुड्मले, कृततमालगर्वे, सौरभसंपन्नपुंनागशालिनि, तरुणप्रवालचक्षुःप्रियप्रियाले, संकलितलवङ्गप्रसवे, कूलंकषरागसागरे, लवलीलावण्यरसायने, कालेयकलिकाकलितकामुकोत्कलिके, प्रसवरजःपिङ्गकुङ्कुमव्राते, वरयुवतीवदनारविन्दमारुतानन्दितसिन्दुवारसूतसुन्दरस्तबके, प्रत्यग्रतिलकतिलकितवनस्थलीमुखे, पाटलीप्रसवविदूषके, विकासमासेदुषि वसन्तसमये, नरपतिरखेटकीर्तिः, आखे-

टककौतुकी, सचिवसंमतः, तरुणतरतनुच्छदाच्छादिताङ्गः, सनिषङ्गशरासनः, जङ्घाजवविजितकुरङ्गं तुरङ्गमधिरुह्य, धनुर्वेदपारदृश्वा विश्वश्वापदशरण्यमरण्यमयासीत् ॥

कनकशृङ्खलानियमितगलान्, विकटवराटिकाभरणान्, मृगकुलापमृत्यून्, वराहमर्माविधः, प्रकुपितव्याघ्रकरप्रहारव्रणितदेहान्, अतिदूरावलम्बिनीभिरधिकमरुणिमानमुद्वहन्तीभिरनेकमृगयानिपीतमरण्यमृगरुधिरपूरमिवोद्वमन्तीभिरविरतलालाजलस्राविणीभिरपि शुष्यन्तीभिरभिनवाशोकपल्लवसुकुमाराभिर्द्राघीयसीभिर्जिह्वाभिरुपशोभितान्, विश्वासानिव मूर्तिमतः, स्वामिनां हृदयवेदिनः, सिंहेष्वपि दर्शितविक्रमप्रकर्षान्, अतिप्रमाणान् कौलेयकानाकलयता, केनचिद्वागुरावाहिना, केनचिज्जालवलयानि धारयता, केनचिद्वीतंसान्बिभ्रता, केनचिच्छार्दूलशकटयन्त्रं प्रसारयता, केनचित्प्रलोभकहरिणानानयता, केनचित्तिरस्करिणीधारिणा, केनचिच्चक्रचापभिण्डिपालमुद्गरलगुडादीनि शस्त्राणि धारयता, केनाचिदुन्माथोपकरणरज्जूरुद्वहता, केनचिन्मृगरञ्जनगीतिचतुरेण, केनचिद्वैणिकेन, केनचिद्वैणविकेन, केनचिद्वांशिकेन, केनचिद्धण्टाधारिणा, केनचिद्वनहरिणवाशितानुकरणनिपुणेन, केनचित्केकानुवादनप्रगल्भेन, केनचिदच्छभल्लभूत्कारानुकृति-

दक्षेण, केनचित्खड्गिकुलगलनिनदानुसारिस्वरविशारदेन, बहुप्रकारेण मृगयुवर्गेण परिवृतः, प्रथमशोधितं रुद्धमृगं वनं प्रपेदे । राजानमन्वगययौ तदा विरचितमृगयानुरूपवेषमशेषमपि सामन्तचक्रम् ॥

स पुनः प्रथममेव विविधायुधपाणिभिर्विमुक्तसिंहनादैर्मृगयुभिराक्रान्तम्, अतर्कितोपपन्नविपदुल्बणघोषणघोणिकुलम्, उत्तालकौलेयककुलविकटदंष्ट्राविलुण्ठ्यमानशललिसंघजङ्घापललम्, अभूतपूर्वरणरणकदारुणरवणवारणयूथम्, अकाण्डसंक्षोभचण्डिमधुर्यहर्यक्षम्, अतिरभसचलितवनमहिषचटुलशफपुटताडितधरणिभङ्गम्, संक्षोभसमयपरिपुच्छ्यमानशार्दूलम्, अधिकसभयगवयम्, भयभ्रष्टतर्णकगतिगवेषणोत्कर्णगोकुलम्, अतिसंरम्भजृम्भमाणशरभमरण्यमाकुलीचकार । मृगयुभिस्तोमररुग्णरङ्कुपदाः, पुङ्खानुपुङ्खशङ्कुपातसातङ्कमातङ्गाः, समुत्पतिष्णुवनमहिषकठिनकंधरापतितखड्गखणात्कारमुखराः, निष्ठुरयष्टिविद्धघृष्टयः, क्षुरिकामुखक्षुण्णतरक्षुकुक्षयः, चण्डभिण्डिपालखण्डितगण्डकाः, शरसंहतिसंहृतासह्यसिंहरंहसः, शातकुठारप्रहारभीतवातप्रम्यः, वेगोत्सृष्टकुटिललगुडकुट्टननिरीहितेहामृगव्यूहाः, निहतयूथपतिविरहशोकदूयमानकरिणीकरुणफीट्कारदारुणाः, विततकरवाललूनचमरवालधयः क्रियन्ते स्म काननभूमयः ॥

अवनिपतिरहितराजन्यकस्येव काननस्य खड्गिविक्रमकथामपि न विषेहे। संभोगानिव सद्यस्तनशशपदानुवृत्तीन्, जरागमानिव शिथिलाङ्गान सारङ्गान् प्रकटितपन्नगरिपुरंहसा तुरगेण परीत्य शरवर्षेण शमयांचकार। ततश्च करवालखण्डितकठिनमहिषकंधरानिरन्तरनिपतितरुधिरझरसहस्रेषु अजस्रमभिपततामरालतुण्डानां भेरुण्डानामुत्तालपक्षपवनकम्प्यमानकदलीदलमर्मरासु मरुक्षितिषु तरक्षूनन्वियेष। प्रत्यग्रनिहतवनहरिणरुधिरपिच्छिलचरणाग्रस्यन्दमानसान्द्रासृञ्जि संजगृहे सवित्रासतन्द्राणि तरक्षोः पदानि। मृगयाविक्षोभमाकर्ण्य तरक्षूणां तरुकुञ्जादभिमुखमापततां जिघत्सया व्यादीयमानेषु विशङ्कटदंष्ट्राशङ्कुसंकटेषु नदत्सु वक्त्रकुहरेषु कृतहस्ततया चिक्षेप चण्डानि शरमण्डलानि। ततः कामीव मदनशरताडिताङ्गो रामानुसरणमकरोत्। स खलु शासिता चतुष्पदाममीषामधिकपदत्वमसांप्रतमिति जानन्निव शरभाणां चतुरधिकानि पदानि चत्वारि चिच्छेद। अनन्तरमचिरविदलितवनकरिकुम्भकूटनिपतितमुक्ताफलबृन्ददन्तुरासु सिंहसरणिषु दृष्टिं वबन्ध। असहमान इव तदीयमाधिपत्यं मृगाणाम्, कर्णपूरायमाणकुण्डलितकोदण्डगुणश्चण्डशरासारवर्षी सरुषो जघान सिंहान् सिंहसंहननः। ततः कण्डूलगजपतिमण्डलगण्डकषणमदजलमलिनितस्कन्धेषु मुचुकुन्देषु दृशं दिशन्, वनभुवि वि-

भुश्चचार । वर्षग्रहैरिव मनुजपतिमहेषुभिरधिकमवग्रहे भिन्ने, वारिमुच इव वमथुवर्षमुचो मदमुचो बभूवुः। सबलगवयघातविसृमरधूलिविसरणधूसरोरस्कान्, अवस्किरमाणान्वल्मीकान्, विभुरिषुवर्षेण जघान विपिननिलयिनो लुलायान् । राजीवबन्धुरिव राजा रश्मिभिरिव शैत्यभेदिभिर्भल्लैरन्धकारानिव मार्गरुधो लुलाव भल्लूकान् ॥

स कदाचित्तृणबिन्दुरिव हरिणीमपातयदवनितले। विष्णुरिव महावराहविग्रहमग्रहीत । युधिष्ठिर इव शल्यं जघान । अनुपत्य च वातवाहनहरिणरंहसा हरिणा वातहरिणान् खमुत्पततो बाणनिकरेण निष्पत्राचकार कृतहस्तः क्षितीश्वरः । स पुनरेवं शरभकुलापमृत्युना, तरक्षुक्षयेण, द्विपविपदा, मृगराजराजयक्ष्मणा, रुरुजरसा, लुलायप्रलयेन, गवयवयोवसानेन, घृष्टिसंघसंघातनिधनेन, प्लवगकुलोपप्लवेन, चमरगलसिरारुधिरमोक्षभिषजा, वातहरिणजातिव्याधिना, रोहितवर्गोपसर्गेणमृगयाव्यापारेण वने विजहार। तेन धरणिपतिमृगयाविहारेण दिग्गजबृन्दमन्तरेण दन्तिनः, कृतान्तमहिषमपास्य महिषाः, पवनवाहनहरिणादृते हरिणाः, शिशिरकरशशमुत्सृज्य शशाः, चण्डिकाकेसरिणं विमुच्य केसरिणः, कुमारबर्हिणं विहाय बर्हिणाः, बाणेन विशसनमवापुः ॥

तस्मिंश्चातन्द्रितश्वपोषके, विकटकृतकूटयन्त्रे, क्षपितगवयवयसि, निबर्हितबर्हिणकुले, शातहेतिदलितमोहितरोहितक्षरितलोहिततिरोहितजम्बुकक्षुधि, चण्डशरलुण्ठितगण्डकायुषि, स्फूर्जदतुच्छभल्लच्छिदामूर्च्छालाच्छभल्लाङ्गनिर्गच्छदास्रपिच्छिलक्षितौ, शल्यकृतशल्यपरिषदरुषि, चक्रमुषितशरभचक्रचक्रभ्रमे, भयोत्कटविचलदाटविककिटिविकटगलघर्घरध्वानभीषणे, क्षुरिकामुखनिर्दयार्दितशार्दूले, कौलेयकदंष्ट्राविलोपितवातहरिणसंघजङ्घाजवे, गजधेनुकागर्भरुधिरस्रावपङ्कनिमग्नाङ्घ्रिसमुत्क्षेपणसातङ्ककङ्कविहंगप्रचण्डपक्षास्फालनरटितानुसारधावमानखेटाखेटकारझाटसंकुले, शरताडितसिंहसंहतिबृंहितभिदुरश्रवसि, विपुलकरवालविघट्टनविघटितमुखविपिनकरिघटाकरुणफीट्कारबधिरितहरिति, भयभ्रष्टतर्णकविचयनव्यग्रगोकुटुम्बिनीकण्ठचण्डाक्रन्ददारुणे, त्रासाकुलनकुलकुले, मृगयुवर्गमार्गितमृगमार्गे, कापेयविकलशाखामृगमृगिततरुगहने विरतप्राये मृगयाकोलाहले, धरणीपतिः परिसरभुवि विहरन्तम्, अतिजवनतया पवनमिव हरिणरूपेण परिणतम्, अभिमततृणचरणमुदितम्, अविरतविरचितमन्थररोमन्थफेनिलमुखाग्रतया राघवशरपातितं मन्दजवजङ्घं मायाकुरङ्गमिव हसन्तम्, राहुकबलनभिया अवतीर्णमतिचिरकालपीतमन्तरमान्तममृतराशिमुद्वमन्तमिन्दुहरिणमिवो-

पलक्ष्यमाणम , अनुक्षणकृतैर्लोचनविक्षेपैर्मिथ्याकुवलयवनानि सृजन्तम्, असहायमप्यतिरभसगतिभिर्हरिणमयमिव विपिनमापादयन्तम्, अन्तरान्तरा दंशविनिवारणविधूतशिरसम्, अवनिपतिमारितमात्मीयबन्धुवर्गमिवानुशोचन्तम्, अरण्यतरुकुसुमपरिमलमिव श्लाघमानम , असकृदाननकण्डूतिघर्षणोत्क्षिप्तचरणाग्रतया जवगमनोपदेशार्थमनिलवाहनहरिणमिवाह्वयन्तम , आसन्नदहनतापदुर्वासमीशानकरतलमपास्य भुवि सुखप्रचारिणमिव दिव्यहरिणम, अतिदूरगगनतलोल्लङ्घनपौनःपुन्येन तुहिनकरवासिनं हरिणमिव जेतुमुत्सहमानम्, गरुत्मन्तमिव कृतवेषान्तरपरिग्रहम्, तापसमिव पादपपर्णवृत्तिम , व्रतिनमिव कृतबहुलङ्घनम्, द्विजातिमिव गृहीतकुशकबलम्, मधुरिपुमिव वनमालोपशोभिनम, आश्चर्यदर्शनं हरिणमालोकयामास ॥

दृष्ट्वा च विस्मयस्मेरमना व्यचिन्तयत्— 'अदृष्टपूर्वोऽयमाश्चर्यजन्मभूमिरासेचनकदर्शनो हरिणः । त्रैलोक्यसंचरणशीलोऽपि नूनमेनमखिलमृगकुलरत्नभूतमनालोकयन्नन्यमृगाधिरोहणेन विडम्ब्यते भगवान्पवमानः । अर्हत्ययमेव हरिणरूपः समधिकसुधाशीतलिम्नि चन्द्रमसो हृदि स्थातुम् । किंचागणितमार्गणमार्गमवज्ञाततुरगवेगमभिमुखमवतिष्ठमान-

मेनमतिजवनगमनगर्वितमाशङ्कते मे हृदयम् । अतिरंहस्विनमद्भुताकारममुमजानता मया किमकारि मृगयाविलसितम् । सर्वथा तुरगेण सरभसमनुपत्य हनिष्यामि महेषुणा हरिणमेनम्' इति सज्यं धनुरुद्वहंस्तदनुगामी जगाम । अतिदूरमाचकर्ष राजानमाशुगपथातिलङ्घी हरिणः । तमनुपपात च पार्थिवचार्यमाणः पवनजवनजङ्घस्तुरंगः । अनन्तरमाशुगं हरिणमाशुगलक्ष्मीकरिष्यन्नाकर्णमाचकर्ष मौर्वीमुर्वीपतिः ॥

अथ क्षणादेणोऽपि दरविरलदविरलवकुलमुकुलपुटनिबिडनिपतितमधुरमधुझरबहुलपरिमललहरीहलहलितमधुकरकुलगलपथविगलदविकलकलविरुतभरितहरितम्, अतिमृदुलमलयपवनतरलितसरसकिसलयपटलघटितमदनहुतवहधियम्, अनिभृतपरभृतचटुलनखमुखशकलिततरुणकुसुमवितातिविलसदपरुषपुरुषतरुमुकुलपरिषदम्, अधिकचपलकपिकुलकरतलविधुतिपतितवरयुवतिकुचकलशरुचिहरपरिणतालिकुचफलनिचयरचितजननयनकौतुकम्, अचिरविकचविचकिलसुरभितसविधभुवम्, अकठोरताम्बूलवल्लीतल्लजवेल्लितक्रमुकतरुदुरालोकम्; आमोदिमाधवीलतालिङ्गनसफलसहकारयौवनम्, मधुमदमुदितवामलोचनालोचनापाङ्गविक्षेपकुड्मलितातिलकतिलकितम्, कामकलाचतुरगाणिक्यमाणिक्यनूपुरवाचालचरणार-

विन्दताडिताशोकपादपोल्लसितपल्लवसंलपिताकालसन्ध्यम्, सौन्दर्यवित्तमत्तकाशिनीमन्दहसितोल्लसितकुसुमस्तबकभरनमन्नमेरुवनस्मेरपरिसरम्, पुराणवारुणीमदविवशकमनीयकामिनीकपोलमदरागकन्दलितचम्पकलताकलापकल्पितकन्दर्पदर्पम्, वेश्याधरमिव बहुविधविटपानमितम्, अन्धकारमिव बहुलताश्रयम्, वाहिनीप्रवाहमिव मकरन्दधानम्, करिणीहृदयमिव कलितानेकपरागम्, अगाहत कमपि महनीयमारामम् ॥

राजापि तदनुगामी तदुद्यानमाससाद । स पुनराराद‌ारामरामणीयकाकृष्टहृदयः, प्रसवभरानम्राशिखरान्मधुकरमालिनान्फलिनांश्च पादपान् कोमलमलयमारुतान्दोलितपल्लवानि वल्लीवलयानि च विलोकयन्, चित्रीयमाणेन चेतसा विस्मृतहरिणगतिरतिष्ठत् ॥

तदा तत्कालतरलितशिखाभिर्लताभिः कृतिशिरःकम्पमिव श्लाध्यमानम्, आरामतरुकुसुममञ्जरीरपास्यानुधावद्भिर्मञ्जुलनिनदमिषेण स्तूयमानमिव मधुकरपुञ्जैः, अधरितसकलतरुप्रसूनगन्धत्वादधिवासयन्तमिव वसन्तलक्ष्मीम्, सौरभमयमिव भुवनमापादयन्तम्, चतुरिन्द्रियविकलमिव जीवलोकं जनयन्तम्, अनाघ्रातपूर्वमतिमनोहरमङ्गनाङ्गपरिमलमुद्वहन्तं कमपि पवमानमभ्यजिघ्रत् ॥

अवनिपतिराघ्राय परिमलम्, अतिविस्मयस्मेरहृदयः 'हृद्यहारिसौरभः समीरः कुतोऽयम्' इति तदुत्पत्तिमन्वेषमाणः, कमलमधुपानमत्तकलहंससारसरसितमधुरेण मन्मथकोदण्डशिञ्जितानुकारिणा काञ्चीमञ्जीररणितेन मिश्रम्, अश्रान्तप्रसरम्, आकर्षणमन्त्रमिव मनसाम्, वासन्तिकडोलोत्सवविलासद्योतकं कर्णमधुस्यन्दि हिन्दोलगानमशृणोत्। तदनु तदनुसारेण गन्तुमनास्तुरगादवततार। कस्यांचिदासन्नतरुशाखायामासक्तकुशमश्वमवस्थाप्य, कौतुकप्रणुन्नेन मनसा नरपतिरुपवनमध्यं प्रविवेश ॥

तत्र च नातिदूरे सरलसहकारवकुलतिलकहिन्तालकृतमालपूगपुन्नागपनसपाटलप्रायं वासभवनमिव वसन्तस्य किमपि बालतरुषण्डम् आलोक्य, सरसकुसुमकेसरविसरसिकतिलेन मकरन्दपङ्किलेन तरुलतामध्यवर्त्मना तदभिमुखो जगाम। अहूयमान इव हिन्दोलगीतेन, आकृष्यमाण इव भूषणमणिमरीचिरज्जुभिः, आहिताह्वानसंज्ञ इव नम्रकिसलयाङ्गुलीभिः, प्रत्युद्गम्यमान इव तदङ्गपरिमलोपहारिणा पवनेन, कृतकुशलप्रश्न इव कोकिलालापैः, प्रदर्श्यमानमार्ग इव मकरकेतुना, प्रेर्यमाण इव कौतूहलेन, बालतरुषण्डमध्यमाससाद ॥

तत्र स पुनरासेचनकदर्शनम्, अनिलपरिचलितविटपतया

सुरासुरमथ्यमानदुग्धार्णवावर्तवृत्तभ्रमामिव पारिजातम्, आसन्नकन्यकाकलमधुरगीतिश्लाघाकृतशिरःकम्पमिवोपलक्ष्यमाणम्, अविरतमूलालवालजलाधिवासशीतालुतयेव वेपमानम्, सरसलतालिङ्गनसुखादिव नूतनमुकुलपुलकजालमुद्वहन्तम्, प्रतिबिम्बव्याजेन मूलालवालपयसि पुष्पितबालवल्लीवधूसंमेलनदुरितापनिनीषयेव मज्जन्तम्, अभितो निरन्तरैर्निजच्छायान्धकारचक्रैरखिललतावधूनामभिसरणनिशामिवारचयन्तम् पुष्पेषोर्भुवनवशीकरणचूर्णानीव तत इतो नवकुसुमरजांसि विकिरन्तम्, अविरलमकरन्दस्यन्दनिभेन हिन्दोलगाननिशमनानन्दबाष्पमिव विमुञ्चन्तम्, मूलालवालाम्भसि परिसरलताङ्गनाभिः सह संक्रान्तप्रतिमतया सलिलक्रीडामिवारचयन्तम्, परभृतबृन्दविरुतिमन्त्रमुच्चार्य मकरन्दाज्यैः स्थलकमलाग्निषु लतावधूपरिणयनाहुतिमिव कुर्वन्तम्, मलयानिलचलितपल्लवाङ्गुलिभिः शाखाभुजाभिरनङ्गनाटिकाभिनयानिव दर्शयन्तम्, समायूरच्छत्रमिवोपरिपरिमललोलेन लोलम्बमण्डलेन, सविधकर्णिकारप्रसूनमिलितानि समुत्तेजनाय कनकशाणनिहितानीव कामास्त्राणि पुष्पाङ्कुराणि धारयन्तम्, अतिसुरभिकुसुमपरिमलनिलीनमधुकरनिकरनिनदेन मूलविहारिणीनां वामदृशां वसन्तोत्सवगानतानमिव दिशन्तम्, मधुसमयबालमित्रम्, मन्मथशरकल्पनायस्कारम्, मधुकरपु-

स्रगागृहम्, अविरहितपत्रसंपदं सार्वभौममिव द्रुमाणाम्, श्रूयमाणद्विजमुखसुभाषितमङ्गलमुत्सवागारमिव वनदेवतानाम्, समीरणतरङ्गितचारुजालकमास्थानमण्टपमिवानङ्गराजस्य, शतमखमिव संनिहितनेत्रसहस्रम्, हरमिवाच्छादितदिगम्बरम्, शीतार्तमिव प्रच्छदपटलासितम्, तपनमिव छायासहायम्, विष्णुमिव विधृतसुपर्णसङ्गम, सिरालमिव परिसरवल्लीवेल्लनैः, जिह्वालमिव पल्लवावलीभिः, प्रस्विन्नमिव प्रसवरसस्यन्दबिन्दुभिः, केसरिणमपि महाङ्गम्, शिखिनमपि गन्धवाहम्, वल्कलिनमपि विलासिनम्, बालसहकारमद्राक्षीत् ॥

यः पुनरुपरि पवनोद्धूतेन परागचक्रेण धारयतीव सकलमहीरुहसाम्राज्यचिह्नमातपत्रम्। यश्च प्रसृमरपरागव्याजेन परिसरलताङ्गनानामुपरि विक्षिपतीव मोहनचूर्णम् ॥

अथ तस्य शाखावलम्बिनीम् अरुणमणिशिलोत्कीर्णां सविधवर्तिन्याः संवाहिकायास्तरलितमुखरमणीयवलयनिकरेण करेण कम्प्यमानाम्, अधिकविसृमरया विद्रुमपाटलया त्विषा पुनरुक्तपल्लवसंपदः सहकारशाखा रचयन्तीं जातिलिङ्गद्रवानुलिप्तमिव गगनतलमातन्वतीं डोलामधिरूढाम्, आलोलचरणनखमणिकिरणनिकुरुम्बैरनङ्गभुवनविजयमङ्गलाङ्कुरानिव कल्पयन्तीम्, मन्मथयागप्रवर्तनवेदिकाविन्याससूत्राणीव विस्ता-

रयन्तीम्, डोलाविहारदूरप्रसारितपादारविन्दताडितशाखाञ्चलैरासन्नकङ्केलिभिः संवाह्यमानचरणामिव सरसकिसलयपाणिभिः, कनकमयावलम्बनरज्जुकलितकरयुगलचलितमणिवलयनिनदेन सेवावसर इति मदनमिवाकारयन्तीम्, समधिकमदरागदर्शनहासिताभिरन्तिकचम्पकलताभिः शाखाभुजाग्रकलितेन तरुणसुमनःस्तबकदीपिकाचक्रवालेन निर्वर्त्यमाननीराजनमङ्गलामिव निरीक्ष्यमाणाम्, श्रमगुरुनिश्वाससौरभाभिसारिताभिर्मधुकरमण्डलीभिर्मुखशशिसंगमाभिलाषसमागतरजनिशङ्कामिवाङ्कुरयन्तीम्, अनवरतस्यन्दिभिरन्तिकतरुकुसुममकरन्दवारिभिरभिषिच्यमानामिव महिलासाम्राज्ये वसन्तेन, मलयपवनतरलितशिखैर्महीरुहैरभ्यर्च्यमानामिव पुष्पप्रकरेण, मधुरहिन्दोलगीतिप्ररूढमुकुलपुलकैः प्रियालतरुभिः स्तूयमानामिव शाखागतकोकिलालापैः, प्रकटितपल्लवपुटाञ्जलिभिः प्रणम्यमानामिव परिसरलताभिः, कोमलकरतलस्पर्शनानन्दितैर्माकन्दशाखिभिः सुकुमारकिसलयकलिकातालवृन्तैरिव वीज्यमानाम्, अभ्यर्णबालाशोकमूलकल्पितेन सततममुक्तपार्श्वया रत्या पुलकितभुजलतया आलिङ्गितकंधरेण सहचरवसन्तदत्तान्कूणितदृशा बाणान् ऋजूकुर्वता मकरध्वजेन कटाक्षितावसरामिव दृश्यमानाम्, माणिक्यभूषणमरीचिजालकारुणिताङ्गीं विद्युत इवावतीर्णाम्;

विद्रुमदण्डादिवोत्कीर्णाम्, कुङ्कुमादिवाङ्कुरिताम्, कोकनदादिवोद्भूताम्, अरुणादिवाविर्भूताम् पल्लवादिवोल्लसिताम्, प्रसवपरिमलहारिणीं पारिजातकोरकादिव पतिताम्, निश्वासामोदनिर्हारिणीं मलयपवनादिवोत्पन्नाम्, अखिलेन्द्रियाह्लादकारिणीम् अमृतादिव समुत्थिताम्, माधुर्यजन्मभूमिमिक्षुदण्डादिवोदिताम्, कलमधुरालापिनीं तन्त्रीगर्भादिव समुत्पन्नाम्, कांचन काञ्चनगौराङ्गीं कन्यकामपश्यत्। इन्दुकलाया इव कान्तिमधुराङ्ग्या दर्शनेन तस्याः सलिलमिव सागरस्य समुल्ललास हृदयमवनिपालस्य॥

ततो नरपतिरेवमचिन्तयत्— 'अहो पूर्वकृतस्य पुण्यस्य कर्मणः परिणामः। यस्मादनिवारितमनेन चक्षुरञ्जलिना मधुरमधुरा कन्यामयी कापि सुधा पीयते। ब्रह्मणो नूनं स्वर्गवधूसर्गपूर्वाभ्यसनेन सृष्टिनैपुणी जाता। अन्यथा कथमीदृगवयवनिर्माणकौशलं घटते' इति विचिन्तयन्, तदा प्रस्विन्नभुजान्तरसंक्रान्तप्रतिमां स्मरशरपरवशतया स्वयंगृहीतहृदयामिव राजकुमारीमुद्वहन्, तत्क्षणजनुषा रोमाञ्चेन हृदयगतायास्तस्या दर्शनतिरोधानशुचेव स्थूलस्थूलं निश्वसन्, अनुक्षणजृम्भिकारम्भमुखपिधानोदञ्चितस्य करस्य निजोरःस्थलहारमणिनिकरसंगतैः प्रतिबिम्बैस्तदालिङ्गनकुतूहलिना हृदयेन समु-

त्पाद्यमानानेकपाणिरिव दृश्यमानः, विमलमणिकुण्डललब्धप्रतिबिम्बतया स्वयमभिसरणसंकेतरहस्यकथनाय कर्णान्तमुपगतयेव तया संलक्षितः, पुङ्खानुपुङ्खनिपतितमदनशरकुसुमनिकरसौरभसुखमनुभवन्निव दरमुकुलितलोचनः पश्यन्, परवशो बभूव ॥

ततस्ताः कन्यकाः संभ्रमोत्तानितैः समीरणतरलितनीलोत्पलवननिर्विशेषैर्नेत्रैर्नृपतिमालोक्य, विस्मयाक्षिप्तचेतसस्तस्थुः । राजकन्यका च डोलाधिरूढैव मसृणमुकुलितापाङ्गेन किंचिदाकुञ्चितभ्रूलतेन, विस्मयोत्तानतारकेण, तस्य लावण्यातिशयमदृष्टपूर्वमाख्यातुमिव कर्णान्तमुपेयुषा, अङ्कुरदनङ्गैरिङ्गितैः किमपि याचमानेनेव, प्रसन्नेन, प्रेमरसवर्षिणा, भावगर्भितेन, आनन्दबाष्पकणस्थगितपक्ष्माग्रेण, विकासिना, विस्मृतनिमेषेण चक्षुषा राज्ञो लावण्यामृतपूरमापिबन्तीव, किमप्युपदिशन्तीव, किमप्यभिलषन्तीव, हृदयमाकर्षन्तीव, स्वहृदयमर्पयन्तीव, मन्मथदुर्विनीतत्वमावेदयन्तीव, महति मोहार्णवे निपतन्तीमशरणां मामवलम्बस्वेति कथयन्तीव, तदङ्गसौभाग्यामृतपङ्कपतिते चक्षुषी समुद्धर्तुमक्षममाणेव, मुषितेव मनसिजेन, आचान्तेव रागेण, लुण्ठितेव मोहेन, कबलितेवोत्कलिकया, विली-

नेव मदनाग्निना, चिरं तस्थौ। तदा कर्णमधुस्यन्दि हिन्दोलगानमनाकर्ण्य, सरसपरिहासालापपेशलं सखीजनमनालप्य, विभ्रमरपरिमलसुभगविविधवनतरुकुसुमविरचिताभरणहस्तां प्रसाधिकामनवलोक्य, सविनयमुपायनीकृतामुद्यानपालिकया शिञ्जानमधुकरपुञ्जां प्रथमोद्गतामपि माधवीकुसुममञ्जरीमनादाय, केवलं डोलापीठकनकमयरज्ज्ववलम्बमात्रेण गात्रं स्थापयन्ती, विमुक्तबहुविधविभवानुषङ्गा, ताम्बूलप्रणयप्रसारितेन पाणिना चेटिकासमर्पितां वीटिकां स्पृशन्त्यप्यगृह्णती, पञ्चशरशरनिकरप्रहारमूर्च्छिता, मकरन्दबिन्दुवर्षेण कृतानुकम्पया वनलक्ष्म्या तत्क्षणक्रियमाणशिशिरोपचारेव सिच्यमाना, कर्णावतंसकमलगन्धलुब्धेन ध्वनता मधुकरेण 'कुमारीजनोचितामपि व्रीडामुन्मुच्य स्वयमभिसरणेन हृदयरुचितोऽयं जनः परिगृह्यताम्' इति केनापि मदनदूतेन कर्ण इव कथ्यमाना, अपाङ्गशुक्तिनिर्गतैर्लोचनांशुपूरैरध्वपरिश्रान्तमवनिपालमिव स्नपयन्ती, कठिनकुचतटघट्टनप्रसृतान्प्रसवशरपावकास्त्रस्फुलिङ्गानिव विहारविशीर्णानुरसि कुङ्कुमपरागान स्थूलस्थूलेन निश्वासेन धुनाना, परिष्वङ्गव्यसनिनीभ्यां बाहुलताभ्यामङ्गस्पर्शव्यवधानभियापसार्यमाणानीव पतन्ति रत्नवलयानि अजानती, स्तनान्तरविसर्पिणीं हारतरलरत्नप्रभां तत्क्षणपतितमदनशरवि-

भिन्नहृदयरुधिरधारामिव समुद्वहन्ती, संभ्रमस्रसिनीभिरलकपङ्क्तिभिर्दिवापि तदभिसरणोचितां तमिस्रामिव तन्वती, अविरलपक्ष्माग्रपातिभिरानन्दबाष्पवारिभिर्निजकुचमणिपीठमधितस्थुषः प्रसवबाणस्य सकलभुवनसाम्राज्याभिषेकमिव रचयन्ती, चामरपवनेऽपि स्विद्यदङ्गी, पुरः प्रसृतेन डोलापीठेन तदन्तिकमनुरागेणेवाकृष्यमाणा अपसर्पता च कन्यकाजनसहजया व्रीडया पश्चादिव नीयमाना, तत्पादतलसंभाविनां स्थलीमपि बहुमन्यमाना, वनपवमानप्रेरितायां तदुपरि पातितकुसुमनिकरायामासन्नलतिकायामपीर्ष्यां कलयन्ती, मुहुरासन्नबालाशोकमङ्घ्रिणा ताडयन्ती, मुहुश्चन्दनपल्लवानवलम्बमाना, मुहुश्चम्पकमञ्जरीमाजिघ्रन्ती, मुहुः सहकारकलिकया ताम्बूलकरङ्कवाहिकां प्रहरन्ती, मुहुः संवाहिकायाः स्कन्धे करं विन्यस्यन्ती, मुहुस्तमालकिसलयान्तरितविग्रहा दर्शितत्रिभङ्ग्या दृशा स्मितविकम्पितकपोलं विलोकयन्ती स्थितवती ॥

दृष्ट्वा च युवानमखिलातिरिक्तरूपसंपदमवनिपालमेवमचिन्तयद्राजकन्या— 'अहो स्रष्टुः सृष्ट्यतिशयः; यस्मान्निष्पन्नमिदमखिलातिशायि लावण्यम् । अयं पुनरात्मभुवा धूर्जटिनयनाग्निदग्धे रतिपतावन्यो मकरकेतुरुत्पादित इव विश्वविमो-

ह्नाय विभाव्यते । नूनममुष्य हिमगिरिमेखलाविशालमतिम-
नोहरमासाद्य भुजान्तरं चिराय कौस्तुभपाषाणविषममधुरिपु-
वक्षःस्थलस्खलनखेदमत्याक्षील्लक्ष्मीः । सर्वस्मिन्नपि जगति सौ-
न्दर्यसारनिधेरमुष्य नान्योऽस्ति सदृशः पुमान । अस्ति,
यद्ययमेव मुकुरतले प्रतिबिम्बितः' इति चिन्तयन्ती, तदा
तदभिमुखचलितमनिवार्यं हृदयमनुगन्तुमीहमानेव, तन्मुख-
सौन्दर्यगुणाकृष्यमाणेव, दुर्वारमन्मथशरतापमसहमाना तद-
वयवलावण्यपूरपतनमभिलषन्तीव, 'सरभसमवतीर्य डोला-
यास्त्वदनुरूपं युवानमद्यैव वृणीष्व' इति यौवनेनोपदिश्यमा-
नेव, पवनतरलपल्लवाङ्गुलिना तत्क्षणक्रियमाणावतरणसंज्ञेव
सहकारेण, तत्कालसमुदितलज्जावनमितयोश्चक्षुषोरधोमुखवि-
सारिण्या प्रभया कोमलनिजचरणनिक्षेपाय पुष्पोपहारमिव
भूतले विकिरन्ती, दीर्घदीर्घेण निश्वासेन प्रदर्श्यमानावनितला-
वतारमार्गेव, चलितमणितुलाकोटिझणझणारववाचालचरणा-
रविन्दम्, आलम्बनरज्जुशिथिलितकरयुगलतरलमणिकङ्कण-
क्वणितवितीर्णकर्णपारणम्, आरणितभूषणकलापकमनीयम्,
आशिञ्जितमेखलम्, आसन्नसखीसत्वरदत्तहस्तावलम्बम्,
अवततार डोलाया धरणितलम् ॥

अवतीर्य च सखीजनधार्यमाणशिथिलावष्टम्भशरीरं ति-

ष्ठन्ती, कामसागरनिमग्नस्यात्मनः करालम्बामिव याचमाना, विगतनिमेषेण विस्मयस्तिमिततारकेण मनसिजगुरूपदिष्टान् अनन्यसंवेद्यान् तांस्तान्भावान् विवृण्वता लोचनेन तं राजकुमारं विलोकयन्ती, तेन च विलोक्यमाना, विचेतनेव गतमपि कालदैर्घ्यं नाजानात् ॥

एवमन्योन्यानुरागरज्जुबद्धहृदययोरिवानन्यव्यापारयोर्मन्मथसमोहनास्त्रताडितयोरिव विवशयोः स्थितयोपार्थिवकुमारीकुमारयोः, विस्मयाक्षिप्तचेतसि किंकर्तव्यतामूढे कन्यकाकुले, विरतहिन्दोलगानानन्दनिष्यन्दे विश्रान्तकिङ्किणीनिनदे विरलीभवति डोलाविहारे, कुसुमशरनिकरमनवरतमपि मुञ्चतः पञ्चबाणस्य मञ्जुनिजचापशिञ्जिनीरणित इव जृम्भमाणे चञ्चरीकरवे, कामबलविजयकाहलेष्विव मधुरमधुरं क्वणत्सु कोमलचूताङ्कुरास्वादकषायकण्ठेषु कलकण्ठेषु, निःसपत्नं प्रवर्तयति रागराज्यं भगवति मकरकेतने, नवकुसुमवर्षमुचि मकरध्वजस्य साहायकमिव तन्वति मन्दमन्दं वहमाने मलयगिरिपवमाने, सफलीभवति मधुमासवैभवे, शृङ्गारमय इव विलासमय इव उत्सवमय इव रागमय इव कुतूहलमय इव जायमाने समये, राजदर्शनकुतूहली तुरगपदानुसारेण समागत्य तदुद्यानमुपविशन् केनापि पातालवर्तिना राक्षसेन गले गृहीतो विदूषकः

'भाव हतोऽस्मि। सर्वलोकशरण्य भुजबलभीम प्रोल्लभूपाल, केनापि पातालबिलप्रतिमल्लमुत्कटदंष्ट्राकरालमास्यबिलमुद्घट्टयता समुत्तुङ्गशाल्मलीशाखिशाखानुकारिणं भुजमुदस्यता बीभत्सदर्शनेन रक्षसा भक्षयितुकामेन गले गृहीतोऽस्मि। परित्रायस्व परित्रायस्व' इति वदन्मुक्तकण्ठमाचक्रन्द॥

राजा तु विदूषकाक्रन्दनमात्र एव राजकुमार्यामासक्तचित्तोऽपि शरणागतत्राणदीक्षिततया सज्यं धनुरादाय, तत्सङ्गिनीं दृशं कथमप्याकृष्य, तत्सङ्गतं हृदयमपि बलादादाय, तदवयवलावण्यावलोकनस्पृहां च किंचित्संकोच्य, तादृशीं तस्याः स्थितिमपि चित्ते विलिख्य, तदीक्षणविक्षेपविलासभङ्गीरपि मनसि संयम्य, 'सखे न भेतव्यम्। अयमहमागतोऽस्मि। आः कथं मयि वर्तमाने मृत्युमुखाभिलाषी को वा वराको राक्षसस्त्वामाक्रामति' इति ब्रुवन् सरभसमयासीत्॥

इति श्रीगद्यकविसार्वभौमस्य वत्सकुलतिलकस्य
महाकवेरभिनवभट्टबाणस्य कृतौ
**श्रीवेमभूपालचरिते**
प्रथम उच्छ्वासः॥



॥ श्रीः ॥

# द्वितीय उच्छ्वासः ॥

अनन्तरमपश्यच्च पुरस्तादञ्जनगिरिपुञ्जैरिव कालरात्रि-यामसंघातैरिव कालकूटकोटिभिरिव नरकनिकुरुम्बैरिव मृत्युसहस्रैरिव विरचितावयवम्, बहुमानुषरुधिरपानदूरोच्छूनपिचण्डब्रह्माण्डम, गम्भीरकुटिलघोणाकुहरनिर्यातैर्निश्वासपवनैः सविधतरुषण्डानि नर्तयन्तम्, अपरिमितशवास्थिमालभारिणं पितृवनमिव जङ्गमत्वमुपगतम्, अतिप्रमाणतया देहस्य दृश्यमानमयःस्तम्भमिव ब्रह्माण्डभवनस्य, तिरोहितरोदोन्तरस्य कायकार्ण्यसंतमसस्य घटयन्तमिव खद्योतविलसितम् अनलज्वालामुचोरक्ष्णोः स्फुलिङ्गैः, कुलगृहमिव कलिकल्मषाणाम्, कूटस्थमिव मायाविनाम्, प्रलयदिवसमिव प्रजाक्षयस्य, जङ्गममण्टपमिव हिंसायाः, कमपि कालसदृक्षं राक्षसम ॥

सोऽपि तदनु दिनकरपरमाणुकोटिभिर्निर्मितमिव तेजसां प्रभवम्, सुरकरिशुण्डानुकारिणा द्राघीयसा ज्याकिणाङ्केन सकलभुवनभुजा भुजेन व्यज्यमानविक्रमप्रकर्षमुद्वीक्ष्य महीक्षितम्, तत्क्षणोत्पन्नविस्मयो रक्षःपतिरुवाच— 'अहो महा-

राजस्य क्षतसंरक्षणदीक्षाधुरंधरत्वम् । अहो क्रूरग्राहगृहीत-गजपतिरक्षणक्षणाविर्भूतस्य गरुडध्वजस्येव मद्गृहीतस्यास्य प्रथमाक्रन्दसमय एवागतस्य भवतः सर्वलोकशरण्यत्वम्' इति ब्रुवाणो राक्षसस्तस्य पार्थिवस्य महानुभावतामवलोक्य चित्रीयमाणचेता विदूषकं विससर्ज । तदनु 'राजन्, पुण्य-श्लोकस्य तव दर्शनेन त्याजितराक्षसभावोऽस्मि । किं चात्र लीलोद्याने या किल कल्याणाकृतिः कन्यका दृष्टा, सा तु महाभागा भविष्यति तव वीरप्रसूर्वधू । अस्याः प्रसूतिरवि-च्छिन्नप्रसरा निखिलनरपतिकिरीटगृहमेधिचरणारविन्दा पा-लयिष्यति पयोधिमेखलां पृथिवीम्' इति निवेद्यान्तरधात् ॥

गते च रक्षसि, वेपमानसर्वावयवं विदूषकं हस्ते गृहीत्वा, 'माभैषीः' इति मधुरमधुरैर्वचोभिराश्वास्य, 'सखे, कथ-मत्र स्थितं मामज्ञासीः' इति पृथिवीपतिरपृच्छत् । स पुन-र्व्याहार्षीत्— 'राजन्, त्वद्दिदृक्षया तुरगपदपङ्क्तिमनुसरन्, द्रुततरगतिरयासिषम् । अद्य पुनरुद्यानप्रवेशे सरभसमूरुपवन-पातितविकटविटपपटलादवतीर्णेनामुतो वटविटपिनो रक्षसा भक्षयितुकामेन गले गृहीतोऽस्मि । तदा केवल तव सर्व-लोकशरण्यतामवधार्य, मुहुर्मुहुर्मुक्तकण्ठमाक्रन्दिषम् ; न तु भवन्तमत्र स्थितमवगच्छामि' इति ॥

तदनु दत्त्वा धनुर्विगतभयस्य विदूषकस्य हस्ते, स्कन्धे करं विन्यस्य तस्य निवर्तमानः, मन्मथमोहनचूर्णैरिव माकन्दपरागजालकैराकुलीक्रियमाणः, दोहलाहननकेलिषु तच्चरणतलसंक्रान्तरागाणीति कङ्केलिपल्लवानि सस्पृहमीक्षमाणः, तदाननोद्भूतमधुरगीतिनिशमनानन्दबाष्पबिन्दव इति मकरन्दस्यन्दान्मन्यमानो लतानाम्, तन्मुखमदिरागण्डूषपायिने वकुलवनायापि बलवदभ्यसूयन्, डोलाविहारभूमिमाससाद । तत्र तामदृष्ट्वा ताडित इव वज्रेण विह्वलीभवन्बलवददूयत । तत्र भुवि तस्या डोलाविहारत्रुटितमवनितलगतमविरलकुसुमपरागधूसरतया कुचकलशविरहवैराग्येण त्रिधृतभस्मानमिव हारमवलोकयन्, तदात्वच्युतामुपरिपरिमलनिलीनमधुकरनिकरां तादृशकेशपाशभ्रंशपरितापेन विमुक्तमकज्जलाश्रुबिन्दुमिव पुष्पस्रजमीक्षमाणः, प्रसवधूलिपुलिनलग्नां पदनलिनमुद्रामनङ्गस्य रागराज्यशासनाय निक्षिप्तां पादुकामिव शृङ्गारदेवतायाः पश्यन्, संवाहनकेलिविरतिविश्रान्तकिङ्किणीनिनदां मणिडोलां तत्पूर्वया विरहव्यथयेव बद्धमौनां विभावयन्, अतिरभसविहारविभ्रमभ्रष्टामष्टापदमयीमासन्नतरुविटपसङ्गिनीं नूपुरभूषां कोमलचरणविश्लेषशुचा विरचितोद्बन्धनामिव विचिन्तयन्, मेदिनीपतिरगाहत विषादपदवीम् । तस्याश्चरणकमलेन ताडितोऽयम् अलक्तकारु-

णकाण्डः कङ्केलिपादपः, तया पुनरालिङ्गितस्तुङ्गकुचकुम्भकुङ्कुमपङ्काङ्कितस्कन्धोऽयं बालकुरवकः, इयमाघ्राता तया दीर्घनिश्वासनिःशेषविधूतपरागसंचया चम्पकमञ्जरी, इदमध्यासितं तया विहारविशीर्णचन्दनाङ्गरागधूलिधूसरं डोलापीठम्, एषा तत्करकलितसहकारकिसलयकलिकाताडनचलितायास्ताम्बूलकरङ्कवाहिन्याः प्रसवधूलिलग्ना पदश्रेणिरिति पुनः पुनरवलोकयन्नितस्ततो बभ्राम ॥

'स्वामिन, सहजमुत्सृज्य धैर्यं कृत्याकृत्येषु किमपि न जानन्निव लक्ष्यसे' इति विदूषकेणोक्तो विभुः प्रोवाच—'सखे, त्वं खलु मम बहिर्वर्तिनः प्राणाः। अस्ति न ते किमपि गोप्यम्। सुहृदां व्यसनाभ्युदयेषु संविभागभाजो भवन्ति खलु सुहृदः। उक्ते सति भवति मनसो महान् विश्रमः। तत्कथयामि। श्रूयतां विषादकारणम्। अहं किल मृगयाविहारी विपिनान्तरात्केनापि जवनजङ्घेन हरिणेनैतावतीं भूमिमानीतः। अत्र तु विपिनहरिण इव व्याधगीतेन हृदयहारिणा हिन्दोलगीतेनाकृष्यमाणो लीलोद्यानस्यास्य मध्यभागमिमं प्राविक्षम् ॥

अत्र पुनरनुपमसखीजनसहस्रमध्यगताम्, शृङ्गारदेवतामिव विग्रहिणीम्, कन्दर्पकीर्तिमिव मूर्तिमतीम्, मणिमयडोलाधिरूढाम्, अविरलमाणिक्यभूषणमरीचिजालकारुणिताङ्गीं

मग्नामिव रागसागरस्रोतसि, अलसविवलितैरपाङ्गविक्षेपै: पुन: संजीवनौषधमिव पुष्पेषोर्विकिरन्तीम्, मुखशशिसादृश्यकथापराधादिन्दोर्बन्दीकृताभिश्चरणपतिताभि: किरणसंततिभिरिव विमलाभिर्नखमणिततिभिरुपशोभिताभ्यां निष्टप्तचामीकरगौरपृष्ठाभ्यामितस्ततो विसर्पिणीभिर्विद्रुमपाटलाभि: प्रभाभि: स्थलनलिनदलावृतामिव वसुमतीमातन्वानाभ्यां चरणनलिनाभ्यां चकासतीम्, नवनिहितबहुललाक्षारसार्द्रपादां वासकमलमधुपङ्कमग्नचरणां सरसिजसदनामनुकुर्वतीम्, पदकमलपलाशायमानेन मरकतमणिमञ्जीरमहसा महितरामणीयकौ ऊरुकान्तिपूरोन्मुखतरुणशफरसंवादिनौ मन्मथतूणीरमातृकायमाणौ जङ्घाकाण्डौ दधानाम्, मेखलामध्यवैडूर्यमणिमरीचिभिरूरुकदलीकाण्डसेचनवारिपूरधियमुपजनयन्तीम्, त्रिणयननयनाग्निपरीतमदनरथचक्रोपमेयौ मणिरशनालोकपाटलौ नितम्बबिम्बौ बिभ्रतीम्, रोमलतासवर्धनकूपरुचा हृदयहरिणजिघांसोर्मन्मथमृगयोरुपायश्वभ्रविभ्रमेण लावण्यनिधानोत्क्षेपगर्तभासा यौवनमहार्णवावर्तकान्तिना नाभिरन्ध्रेण संनिहितसौभाग्यविशेषाम्, मध्यलतामधुपावलीं सौन्दर्यपूरशैवालमञ्जरीं तारुण्यसिन्धुरदानरेखां कामसुभटखड्गवल्लीं स्तनतटकालिन्दयमुनाम् अवलग्नाकाशमेघमालां रोमराजिं धारयन्तीम्, निसर्गनीलचूचुकालंकृतमुखौ शिता-

ङ्कुशाघातरूढकार्ष्ण्यौ कुम्भाविव करिराजस्य कुचकलशा-वुद्वहन्तीम्, किसलयिताभ्यामिवाङ्गुलीभिः पुष्पिताभ्यामिव नखमरीचिभिर्भुजलताभ्यां विद्योतमानाम्, प्रसर्पता मणिताटङ्कखचितमौक्तिकप्रभावितानेन चीनांशुककञ्चुलीमिव कपोलमुकुरयोः कल्पयन्तीम्, उद्वेलरागजलधितरङ्गशकलाय-मानं कामफलप्रदानचिन्तामणिमनङ्गसर्वस्वमधरमाबिभ्रतीम्, अलिकशशिनिर्यदमृतधारायमाणनासालताम्, निस्तलस्थूलेन नासालंकरणमौक्तिकेन अङ्कुरितसुधौघबिन्दोरिन्दोस्तुलामान-नम्य सूचयन्तीम्, मध्ये कृष्णरुचिमुद्वहतः सान्द्रतरपक्ष्मवेला-वनराजेर्नयनकलशार्णवादमृतकालकूटशक्तिमाविर्भावयन्तीम्, कटाक्षशरक्षेपधनुर्लताभ्यां मुखरङ्गमुग्धलासिकाभ्यां मानसहृ-रिणवेष्टनवागुराभ्यां भ्रूलताभ्यामुद्भासमानाम्, श्रवणान्ता-वलम्बिना स्थूलमुक्ताफलघटितेन वालिकायुगलेन मणिकुण्डल-कोटिमकरसलिलायमानमच्छविमलमालोकमुत्सृजन्तीम्, प-रिसरगतभुजगमुखपतितविषबिन्दुसनाथमध्यशंकरशेखरश-शाङ्करेखानुकारिण्या कालागरुतिलकया फालरेखया परिष्कृ-ताम्, वसन्तश्रियमिव समुल्लसिततिलकविलसद्भ्रमरकाम्, अरण्यानीमिव चारुचलदलकाननाम्, पशुपतिदेहश्रियमिव विलसद्गुरुभूषणाम्, जन्मभूमिमिव शृङ्गाराणाम्, उत्पत्ति-स्थानमिव लावण्यस्य, वशीकरणौषधमिव मनसः, बन्धनवि-

द्यामिवेन्द्रियाणाम् , विहारस्थलमिव विभ्रमस्य, तपःफलमिव संसारस्य, मातृकामिव महिलासर्गस्य, कामपि कन्यकामपश्यम् ॥

अखिलभुवनातिरिक्तलावण्यसंपदम् अन्यामिव लक्ष्मीमुत्पादितां विधिना कन्यामिमामालोक्य, व्यस्मयत मे हृदयम् । प्रायेण तस्याः कुचकलशकान्तिकदर्थितानां कुसुमस्तबकानामासवबिन्दुपतनमश्रुमोक्ष इति, बिम्बाधरसाम्यधारिणां पल्लवानां शुककुलतुण्डखण्डनं दण्ड इति, मनोहरजल्पितमाधुर्यपराजितानां परभृतानां पल्लवितसहकारवासः पावकप्रवेश इति, अवयवलावण्यविजितविभ्रमाणां लतानामुपरि तरुविटपमिलनमुद्बन्धनमिति, सौकुमार्यतर्जितानां शिरीषकुसुमानामनिलचलनमातङ्कवेपथुरिति, बाहुलतोपमानत्वजातागसां वल्लीविटपानामन्तिकलतावेल्लनमन्त्रबन्धनमिति, निश्वाससौरभनिराकृतानां वकुलकुसुमानामलिकुलचरणताडनमवमाननेति, पादतलद्युतिभर्त्सितपल्लवानां वीरुधां प्रतानकलनं जटाधारणमिति च मन्यमानोऽहं विस्मृतनिमेषेण विस्मयविस्तारितेन सरागेण मन्मथसर्वस्वेन चक्षुषा तया विलोक्यमानः, तदपाङ्गसहायेन कुण्डलितकोदण्डेन कुसुमचापेन घोरशरनिकरैस्ताड्यमानो बलवदपहृतचेतनः स्थितवान् ॥

सापि मां विलोकयन्ती मयापि च विलोक्यमाना, मत्प्रतिबिम्बलोभिना हृदयेनापसार्यमाणमिवायतनिश्वासनिपतितमुत्तरीयांशुकमजानती, स्तनान्तरसंक्रान्तप्रतिबिम्बमालिङ्गन्तीव मां मुहुर्मुहुर्विरचितबाहुस्वस्तिका, प्रतिक्षणं स्मितमरीचिभिः प्रथमाङ्कुरानिव प्रेम्णः प्रकाशयन्ती, स्वहृदयप्रतिबिम्बितं मां निरुन्धतीव रोमाञ्चमिषेण कण्टकवृतिमाबध्नती, मदनशरतापमूर्च्छिता वनतरुकुसुममकरन्दवारिभिः सिञ्चता मलयपवनेन मधुकरवाचा प्रबोध्यमानेव, मणिमयडोलारज्जुसंगतां प्रतिच्छायामधिकवेपथुविवशमात्मानमवलम्बितुमन्तिकमुपेयुषीं सखीमेव मत्वा तदुपरि करं निक्षिपन्ती, संक्रान्तचामरप्रतिमं स्तनान्तरं निरन्तरकामास्त्रतापनिर्वापणार्थमन्तराकृष्टहारमणिकिरणवितानमिव बिभ्रती ददृशे ॥

अत्रान्तरे राक्षसगृहीतस्य तव करुणमाक्रन्दमशनिमिव श्रवसि पातयन्, पातकी विधिः पराङ्मुखो बभूव । किमियमवनितलविहारार्थमवतीर्णा सुरसुन्दरी, आहोस्वित् उपरिभुवनविलोकनकुतूहलादुद्गता पन्नगराजकन्यका, उत विविधविलासपेशला गन्धर्वराजदुहिता ? अन्यथा मानुषीषु सृष्टिषु कथमियमुपपद्यते रूपसंपत्तिः । त्रिभुवनरत्नभूतां हृदयसुलभामीदृशीं कन्यकां कथमहमुपलप्स्ये' इत्येवमाभाषमाणे महीभृति, विदूषकः पुनरुवाच— 'आः, ज्ञायते राक्ष-

सेनोक्ता कन्यका खल्वियम् । किंच सत्या भवन्ति तादृशां वाचः । त्वं खलु तस्यास्तादृशरसभावार्द्रविलोकनैकविषयो जातः । तथापि किमर्थमात्मा क्लेशार्णवे पात्यते । किंनिमित्तं सुखोदर्केऽपि कार्ये वितर्कः क्रियते । सा किल कल्याणलक्षणा कन्यका लक्ष्मीरिव नारायणस्य भवतो हृदयग्राहिणी भविष्यति । पार्वतीव परमेश्वरस्य सततमभुक्तपार्श्वा स्थास्यति । रोहिणीव शशाङ्कस्य सर्वान्तःपुरमुख्या वर्तिष्यते' इति तद्वचनमाकर्ण्य भूपतिर्भूयो बभाषे— 'राक्षसोऽपि तदात्वाप्रियं यत्किमप्युक्तवान । कथमुपपद्यते रक्षसां भाव्यर्थवेदिता । कथमिव तस्याः पुनर्दर्शनं घटते' इति वदति राज्ञि, दशरथसुतविपुलभुजबलभज्यमानभर्गधनुर्ध्वानभङ्गिभयंकराः, कोपकुटिलमृडनिटालतलदृगनलचटुलहेतिपटलपरिप्लुष्यमाणदनुजपुरगोपुरकूटपतनरटनकटवः, कल्पविरतिघस्रघस्मरस्मरहरमुखकुहरविजृम्भमाणघोरकालानललोलकीलजाललीलादह्यमानजलधिलवणकूटस्फोटचटचटारावभीषणाः, प्रलयजलधरनिकरजठरनिर्गलनिर्गतपरुषपविवर्षविहतिविघटितकठिनकुलगिरिकटकरटितपटुमहिमपाटच्चराः, त्रिभुवनरोमहर्षणसंकर्षणानुजचाणूरबाहुरणसमयविरचितपृथुभुजास्फोटननिनदचण्डिमलुण्टाकाः, कनकगिरिशिखरपुञ्जभञ्जनसंनह्यत्प्रभञ्जनरसितगर्वसर्वंकषा जजृम्भिरे सेनापटहझाङ्काराः ॥

ततो विदूषकः ससंभ्रममुवाच राजानम् —'राजन्, मन्ये त्वदन्वेषि सैन्यमायाति। यतश्चक्रवालधरणिधरकुहरपुटप्रतिहतिपरावृत्तमिव परिमण्डलं महदाकर्ण्यते सेनापटहभाङ्करणम। तदेहि, गच्छावः सरभसम्। आरुह्यतां तुरङ्गः। ननु परिणतप्रायो दिवसः। श्वः समागत्य कन्यकागतिमन्विष्यामः' इति विदूषकेण बलात्प्रेर्यमाणस्तुरगमारुरोह। अरण्यलतासंसक्तमंशुकमिव तत्संगतं हृदयं कथंकथमप्याकर्षन्, आरामतरुरिव पल्लवं प्रत्यग्रमुद्वहन रागम्, केनाप्याकृष्यमाणमिव नयनयुगलमवशः पुनः पुनः पश्चाद्विक्षिपन्, कुसुमधवलाभिरन्तिकतरुशाखाभिरनाहन्यमानोऽपि धारयन्वेदनां महतीम्, चिन्तातूलिकया तामेव दीर्घलोचनां मुहुर्मुहुर्विलिखन् आसन्नश्चित्तभित्तौ, पार्श्वतरुकोकिलालापैः शङ्कुभिरिव श्रवणयोस्ताड्यमानः, तुषानलमिव पुष्परजो वपुषि विक्षिपता दक्षिणपवनेन दत्तहृदयतापः, स्वपुराभिमुखं प्रतस्थे॥

अथ त्रिजगदुदरंभरिगभीरभेरीभांकारभिदुरब्रह्माण्डम्, धौरितकादिगतिचातुरीधुरीणतुरगखुरघरट्टघट्टनदलदिलातलम्, उद्धुरजनकलकलरवस्मर्यमाणमथनसमयसमुत्तालजलधिकल्लोलकोलाहलम्, अधिकमदसुभटव्रातकरभ्राजमानकाचमणिकाल करालकरवालकरनिचयमेचकितविरोचनमरीचि समाजगाम

सराजकं सैन्यम् । आगत्य च राजानम् अहमहमिकया प्रणम्य पर्यवारयत । अनन्तरमन्तिकवर्ति राजन्यकमप्यनाभाषमाणः, समानवयसः साञ्जलिबन्धान्सामन्तपुत्रानप्यनालोकयन्, सकलभुवनराज्यचिन्तासुहृदो वृद्धमन्त्रिणोऽप्यनाद्रियमाणः, पुरतः कलमधुरस्वरं वन्दिभिः पठ्यमानाः स्वभुजपराक्रमशंसिनीर्भोगावलीरप्यनाकर्णयन्, दूयमानेन मनसा स्वपुरीं प्राविशन्। तोरणभुवि विसर्जिताशेषराजलोको द्वारि निवारिततन्निखिलपरिजनो विदूषकद्वितीयः, नीहारांशुशुचिभिरूर्णनाभतन्तुचेलजालकैः, निर्मोकनिभैर्नेत्रैः, कदलीगर्भदलकोमलैः क्षौमैः, निश्वासहार्यैश्चीनांशुकैः, मायूरापाङ्गपाण्डुभिः पौण्ड्रैश्च कलितवितानमण्डनम्, लम्बमानराङ्कवयवनिकावरणम्, शिरीषकुसुमदीप्तिभिः, बालशैवालपलाशमेचकैः, अवश्यायश्वेतैः, श्येनपक्षश्यावैः, आम्रकिसलयताम्रैः, कर्णिकारकेसरगौरैः, तित्तिरिदेहप्रभैः, कज्जलकालैरनेकवर्णैः पट्टांशुकैर्वेष्टितहाटकस्तम्भसहस्रम्, केतकीगर्भदलसुकुमारकौशेयनिचोलप्रावृतोपधानैर्हेमतूलशयनीयैरलंकृतैकदेशम्, मणिकुम्भमुखोज्झितबहुलमृगमदजलसेकपङ्किलप्रान्तकल्पितकर्पूरपिष्टातकपञ्चाङ्गुलभासितवेदिकासनाथम्, मृदितहरिचन्दनकिसलयरसोपलिप्ताजिरम्, क्रीडाकरिकुलकर्णतालपवनकम्पिताङ्गणचम्पकलताकुसुमकेसरविसरधूसरमात्मभवनं प्रविवेश ॥

अथ नरपतिहृदयोद्गलितेनेव रागेण दिवसमपि लोहितायमानं बभूव। जायमानकमलिनीविरहशोकेनेव दिवसकरोऽपि तेजसि मन्दिमानं दधौ। अथ गगनफणिफणाच्युत इव पद्मरागमणिः, वरुणपुरगोपुरमणिकलशकान्तिः, पश्चिमदिशाशोकपल्लवस्तबकः, संध्याताण्डवरयच्युतशंकरकराङ्गारविभ्रमः, कालपरशुखण्डितमूलस्य पश्चिमदिशि पततो वासरपादपस्य पाश्चिमफलानुकारि पाटलं बिम्बमुद्वहन्, अस्तगिरिशिखरमाससाद भगवानंशुमाली। क्रमेण च परिणमत्प्रियङ्गुरजःपिङ्गलबिम्बे लम्बमाने रवौ, जरच्चकोरनयनतारकारुणेन तरणिमहसा रज्यमाने कुसुम्भाम्भःक्षालित इव दृश्यमाने जगदण्डे, लाक्षिकपटावकुण्ठितास्विव लक्ष्यमाणासु दिक्षु, शोणिमानमधिकमामुञ्चति मधुमदाहतेऽपि माणिक्यमुकुरानुकारिणि कामिनीनां कपोलस्थले, शनैःशनैर्निर्वाति हरिदश्वतेजसि, शाम्यति तरणिमणिशिलाजातवेदसि, संकुचतः कमलिनीषण्डादुत्पतितुमुत्कण्ठमानेषु आकण्ठपीतमधुपिचण्डिलेषु मन्दसंडीनेषु मधुकरमण्डलेषु, तदात्वदह्यमानकालागरुधूपमण्डलोद्गारिषु वासागारवातायनेषु, गगनकेदारविकीर्यमाणेषु भाविनस्तिमिरसस्यस्य बीजाङ्कुरेष्विव गच्छत्सु वसतिमाकाङ्क्षमाणेषु वायसेषु, रजनिनटीप्रवेशरक्तयवनिकापटे गगननिकषकनकरेखायमाणे समुल्लसति सांध्ये महसि, जरन्महिष-

बेषमुषि, गिरिनिकुञ्जेषु कुञ्जरपुञ्ज इति परिपुच्छयमानैः पञ्चाननैर्जिघांस्यमाने, पल्वलोदरेषु वनवराहयूथमिति शरान्विसिसृक्षुभिः सस्पृहमीक्ष्यमाणे पुलिन्दैः, सागरपयसि कालकूटकदम्बकमिति जलदेवताभिः सभयमवलोक्यमाने, निखिलनदीपयसि नीलोत्पलवनमिति चलितपक्षतिना चञ्चरीककुलेन पतितुमभिवाञ्छ्यमाने, कैलासभूभृति ताण्डवरभसपतितखण्डपरशुवेतण्डकृत्तिरिति प्रमथैः सवेगमुद्दिश्यमाने, दिगन्तगिरिकन्दरागृहेषु कम्बलमययवनिकावरणमिति बद्धनिधुवनैः सिद्धमिथुनैरधिकमभिनन्द्यमाने, सप्तर्षिसदनेषु सायंतनसमयहोमधूमजालकमिति मुनिभिर्विमृश्यमाने त्रिभुवनरन्ध्रं रुन्धति तमसि, प्रवृद्धतिमिरकालिन्दीप्रवाहबुद्बुदेषु, गगनफलकरजतबिन्दुषु, रजनीशुक्तिमुक्ताफलेषु, ज्वलिष्यतः शिशिरकरज्वलनस्य पुरःप्रसृतेषु स्फुलिङ्गेष्विव स्फुरत्सु तारकाचक्रवालेषु, प्रसवशरप्रणुन्नासु प्रसाधनवतीषु सान्द्रेऽपि तमसि वासनालब्धपदवीषु प्रयान्तीषु सांकेतिकं स्थानमभिसारिकासु, रतिकरणनिपुणरागिणीनिकायमणिवलयरणितगुणितमणितवाचालेषु वलभीनिवेशेषु, तुरङ्गमलावण्यावलोकनोत्तानितरजनिनयनानुकारिणीषु प्रज्वलन्तीषु मन्दुराप्रदीपिकासु, शार्करस्थलाधिशायिनि विरतरोमन्थकर्मणि निमीलितदृशि निनिद्रासति मृगकदम्बके, संवेश-

विवशेषु शैवालिनीपुलिनमधिशयानेषु विगतवीचिडोलारिरंसेषु हंसेषु, प्रौढे प्रदोषसमये, धरणिपतिः कथं कथमपि निर्वर्तित-तत्कालसमुचितक्रियाकलापः, शयनतले निपत्य तामेव हरिण-लोचनां विचिन्तयन्, विदूषकमुवाच— 'तदा संसारतरुम-ञ्जरी सा तव वशे वर्तिष्यत इति सत्यमिव त्वया व्याहृतम्। सा कथमुपलभ्यते । युक्तिमवलम्ब्य कां त्वयोदाहृतम् । सा खलु स्वजन्मना कस्य वा पुण्यकृतः कुलमलंकृतवती । तदा-ख्यामलंकुर्वन्ति धन्यानि कान्यक्षराणि । का वा मही तस्या-श्चरणकिसलयविन्यासेन चरितार्थीक्रियत इत्यविज्ञायमानमूलं कथमिदमुपपद्यते कार्यम्' इति ॥

सोऽप्यब्रवीत्— 'इदं खलु प्रसिद्धमेव, रूपैकपक्षपाति हृदयमिन्दीवरदृशामिति । मानुषलोकदुर्लभेन मन्मथातिशा-यिनस्तव लावण्येन रज्यति जगति न का वा वरवर्णिनी' इति। ततो राजा जगाद— 'स्तुतिभिरलमत्र संतापसमये । अन्यः खलु तादृशस्य सरसालापस्य समयः । तदानीं तु सा सह सखी-भिः सौदामिनीभिरिव वर्षर्तुदेवता वनदेवताभिरिव वसन्तल-क्ष्मीः वासन्तिकडोलोत्सवविलासमाचरन्ती, विस्मयस्तिमितच-क्षुषा मया विलोकिता; कथमवलोकयिष्यते' इति वदति राज्ञि, विदूषकः पुनर्व्याजहार—'किं तया नावलोकितस्त्वम्' इति ॥

राजा अब्रवीत्—'कथमिव नाहमवलोकितः । आदर-विसृष्टमादौ, ह्रिया मम विलोकनस्पर्शे विवर्तितम्, अन्तरान्तरा सखीजनशङ्काविजिह्मपक्ष्ममालम्, अन्यतश्चलति मदीक्षणे भूयोऽप्यासज्यमानम्, ईषदपाङ्गितदृशि मयि पुनराक्षिप्यमाणम्, अर्धसमीलितमीक्षणमभूत्। तदा कर्णावतंसकुसुममञ्जरीपुञ्जितमधुकरमण्डलतया कोकिलनिनददग्धं विवर्णितमिव श्रवणदेशमुद्वहन्ती, मदीक्षणस्पर्शलज्जाविवर्तमानवदना, कपोलतलप्रतिबिम्बितमनङ्गशरतापितं माममन्दानन्दबाष्पपूरैरनुकम्पयेव स्नपयन्ती, तत्कालपरिरम्भणसुखालाभशोकेनेव कृष्णमुखं मत्प्रतिबिम्बग्रहणहर्षेण नृत्यदिवासकृदुत्कम्पमानमुरोजद्वयं दधती, प्रत्यासन्नबालाशोकपल्लवप्रतिमां हृदयगतां मूर्तिमतीमिव रागवृद्धिं दधाना, स्वकरकलितसहकारकिसलयकलिकाताडनसमये मदभिमुखचलितां ताम्बूलकरङ्कवाहिनीं मदाह्वानदूतीमिव प्रेषयन्ती, गलन्मणिवलयानिवारणप्रसारितपाणितया परिसरवर्तिनो रतिपतेरयमपि ताडनीय इति मामिव निर्दिशन्ती, अद्यैव मदनाग्निसाक्षिकं दत्तोऽयमात्मा; गृह्यतां कर इति तिष्ठन्तीव, मदभिमुखप्रधावितं स्वहृदयमिव ग्रहीतुमुद्यता, दीर्घनिश्वासविधूतसान्द्रकुचतटचन्दनधूलितया प्रबलमदनाग्निदह्यमानस्य हृदयस्य भसितपतनमिव सूचयन्ती, मुहुरुन्नमितयैकभ्रूलतया मन्मथस्य मदवस्कन्द-

नसाधनमन्यमिव मोहनं चापमुपदर्शयन्ती, अनुक्षणविलासस्मितालोकव्यपदेशेन तापोष्णनिश्वाससंतप्यमानमधरदलममृतपूरेणेव सिञ्चन्ती समलक्ष्यत' इति निशम्य वचनमवनिपालस्य, विदूषको बभाषे— 'एवं चेत्, अनाराधितप्रसन्नस्ते भगवान्पञ्चशरः। अस्ति यदि दृष्टिरुत्कण्ठिता किमन्येनायासेन। प्रायेण तस्यै त्वया वेदनामतिमहतीं दत्त्वा क्रीतमिव तदन्तःकरणम्। सर्वथा समुत्कूलरागया तया यावदन्विष्यसे' इति ॥

ततो निजगाद राजा— 'सापि मदन्ववायशीलनामधेयस्थानानि न जानाति। अन्वेषः कथं घटते' इति। तदनु विदूषको व्याहार्षीत्— 'तिष्ठति ननु परस्परदृष्टिविद्धयोर्युवयोः प्रतिभूत्वेन पञ्चशरः। स एव भविष्यति तस्या भवदन्वेषणमार्गसंदर्शकः। किमद्य चिन्तया। प्रभातायां च रजन्यां भूयोऽपि यास्यसि लीलोद्यानम्। तव हृदयचोरीं तामपि रागरज्ज्वा निबध्य तत्र समानेष्यति त्रिभुवनमान्यशासनो देवः शम्बररिपुः। तत्र खलु निर्वेक्ष्यसि परिणतानि मनोरथफलानि। इदानीं त्वया रात्रिंदिवं मृगयाविहारेण बलवदायस्त आत्मा निद्रासुखमनुभावयितव्यः' इत्युक्त्वा विदूषकस्तदनुज्ञातः स्वभवनमयासीत् ॥

ततः प्रबलमदनवेदनस्य पार्थिवस्य तनुरिव पाण्डुतामुवाह

दिशा पौरंदरी। उर्वीपतिहृदयमिवोद्भूतरागमुदयमानमुडुपति-
मण्डलमलक्ष्यत । सागरशयेन भगवता नारायणेन घनति-
मिररजनिचरनिकरनिबर्हणविमुक्तमिव चक्रमुदजृम्भत वि-
म्बमुदयरागशोणमेणाङ्कस्य । अङ्कुरितकिरणयवाङ्कुरमनङ्गजग-
द्विजयमङ्गलपालिकापात्रमिव कस्य वा न बबन्ध हृदयमि-
न्दुबिम्बम् । उदयगिरिपरिसरविहारिणा दूरप्रसारितकरेण तु-
हिनकरकरेणुना द्रुतमभज्यत तमस्तमालतरुः । प्रथमगिरेः स्फ-
टिकशिलाप्रतिमागतं सावर्ण्याददृष्टवपुषः चन्द्रमसः कलङ्कं
कुरङ्ग इति कुण्डलितचापः प्रहर्तुमियेष मुग्धो लुब्धककुमार-
वर्गः । चटुलचकोरचञ्चुचूषणोच्छेषणदूषिता इति सुधांशुना
संशोधनार्थमनलनिहिता इव भान्ति स्म माणिक्यसौधपतिता
मयूखाङ्कुराः । दिशि दिशि विचकरिरे मृदुमरुदाहतिभिः शि-
तकरपत्रक्षतचन्दनक्षोदधूसराः परिमललहरीलगदलिकुलके-
लयः कुमुदवनधूलयः ॥

क्रमेण च रजनीरजतकर्णपत्रे पथिकहृदयदात्रे प्रद्युम्नवि-
जयधवलातपत्रे समुल्लसति कैरवमित्रे, विसृमरबहुलपरिमल-
सुरभिषु विघटमानेषु कुमुदषण्डेषु, तुहिनकरकरनिकुरुम्बचु-
म्बनचुञ्चुचञ्चुषु चकोरेषु, तुहिनजललवजनितजडिमनि लु-
लितकुमुदवनकेसरविसरधूसरितसरिति सरति मधुकरविरुति-

भरितहरिति मरुति, सितकुसुमवसनाङ्गरागधारिणीषु सौर-
भानुमेयगतिषु चलन्तीष्वभिसारिकासु, तत इतः शरवर्षमुचि
पथिकजनप्राणखण्डिनि सदर्पे कन्दर्पे, मधुरमधुरया गिरा मद-
नभुजविजयभोगावलीमिव पठत्सु विकचकुमुदवनबहुलमधुप-
ङ्कमग्नचरणेषु षट्चरणेषु, प्रथमगिरिशिखरपादपविटपाग्रघट्ट-
नपतितरक्ते स्फुरितनखपदजतुमुद्रे मुक्ताकुण्डल इवाखण्डल-
दिशो दृश्यमाने स्पष्टकलङ्के शशाङ्कमण्डले, प्रोषितयुवतिहृदय-
भेदिषु विरहातुराणां चक्रवाकमिथुनानामतिकरुणेष्वाक्रन्देषु,
मदनयशोराशिभिरिव विकचकुमुदवनपांसुभिर्धवलीकृतासु क्रि-
यमाणचक्षुरातिथ्यासु दीर्घिकासु, प्रतापभासितदशदिशि गत-
वति भास्वति कालेन चन्द्रिकासलिलाभिषिक्ते जातोदये राज्ञि
तारकापरिवारपरिवृते गगनमणिमण्टपमध्यमध्यासेदुषि, नेदी-
यसि निशीथसमये, धरणिपतिः समधिकनिजतापज्वरोष्मसं-
पर्कसमुद्गतस्वेदामिव जालान्तरोपगतशशधरकिरणसंसर्गाङ्कु-
रितसलिलबिन्दुमिन्दुकान्तमणिशिलास्थलीमधिवसन् , अङ्गे-
ष्वनुक्षणोद्भिन्नस्वेदसलिलकणनिकरतया पुङ्खानुपुङ्खपतितमद-
नशरकुसुममकरन्दबिन्दूनिव धारयन्, प्रस्विन्नभुजान्तरसंक्रा-
न्तसालभञ्जिकाप्रतिमतया हृदयवार्तिनीमिव राजकुमारीं दर्श-
यन् , अन्तर्ज्वलदनङ्गदहनधूमप्रसरमिव विभावयन्वपुषि
वैवर्ण्यम् , हृदयान्तर्गताया नरपतिदुहितुरुपरि रोमाञ्चमिषेण

कामशरत्राणकञ्चुकमिवामुञ्चन् , क्षणमासांचक्रे ॥

ततः प्रबलोत्कण्ठः क्षणदाकररश्मिभिरिवाकृष्यमाणः सौधशिखरमारुरोह् । तत्र चन्दनजलसिक्तमणिकुट्टिमतले तारकाप्रतिबिम्बमेदुरोपहारकुसुमे बहुलविकीर्णकर्पूरधूलीपरिमलमिलदलिकुलझंकारमुखरे दक्षिणपवनविकीर्यमाणपरिसराराम-कुसुमपरागसुरभौ परितो लम्बमानमुक्तासराकिरणपुनरुक्तचन्द्रिकाधवलिम्नि सौधतले, मणिपर्यङ्किकाशय्यामधिशिश्ये । शयनगतश्च चिन्तां विवेश—'विरहिपरिपन्थिनोऽपि कन्दर्पवसन्तमन्दानिलाश्चन्द्रवदतिदारुणात्मानो न भवन्ति। ते पुनर्दुःसहतापातुरचेतसा मया कथं कथमपि सोढुं शक्याः; न त्वयमतिनिष्ठुरो मृत्युसहायः पापकारी। अयमकाण्ड एव खण्डयत्यसूनंशुपरशुभिः कालकूटसहोदरश्चन्द्रहतकः ।' भूयश्चिन्तितवान्—'एते पुनरिन्दुकन्दर्पमुखाः प्रलयतरणिकिरणनिकरदुःसहतापज्वरकारिणो मामिव तामपि नियतं संतपेयुः , येन तदा तस्यां व्रीडाचापल्यौत्सुक्यहर्षरोमहर्षस्तम्भकम्पवर्णभेदस्वेदप्रलयादयो विलोकिताः । किंतु डोलाविहरणेऽपि चापलहर्षौत्सुक्यकम्पाः संभवेयुः। इतरे तु मामुद्दिश्य निष्कारणबन्धुना भगवता पञ्चशरेण विनियुक्ताः, सहचारिणस्तानपि मयि संभावयन्ति। यतो मामानन्दबाष्पजललुलितेन विस्मयस्तिमितता-

रकेण विस्मृतनिमेषेण चक्षुषा विलोकयन्ती प्रस्तुतपूजाय सखीभिर्भगवते मकरध्वजाय निवेद्यमानापि न ददाति पुष्पाञ्जलिम्। पञ्जरशुकपठ्यमानाममृतरसस्यन्दिनीमार्यामपि न शृणोति। आत्मसंवर्धितयोर्माधवीसहकारयोः सादरसखीजननिवेद्यमानां प्रत्यासन्नां परिणयनकेलिमपि नाकलयति। वकुलादितरुदोहलविधानकेलिषु कौतुकिनीः सखीरपि न चोदयति। परिसरवर्तिनीभिः परिचारिकाभिर्नवनलिनपलाशभाजननिहितेन मकरन्दगन्धतैलानुषङ्गिणा चम्पकस्तबकदीपिकाचक्रवालेन निर्वर्त्यमानमपि नीराजनविधिं नापेक्षते। मन्द्रमधुरतन्त्रीरवानुसृतां नाकर्णयति कर्णानन्दसंदायिनीमपि गायनीगीतिम्। किं पुनरनया चिन्तया। तदानीमनाराधितप्रसन्नेन देवेन पञ्चशरेण नयनपथमुपनीतममृतातिरिक्तमाधुर्यमखिलभुवनैकसारमङ्गनारत्नमनादृत्य, अपरिणतभागधेयेन मन्दधिया मया विदूषकाक्रन्दमाकर्ण्य किमिति गतम्। किं निमित्तं वा तदाकूतिवेदिनीभिरासन्नवर्तिनीभिः सखीभिः सह तदात्वोचितं न संलपितम्। किमर्थमस्या जन्मान्ववायनामधेयादिकं न पृष्टम्' इत्येवं विचिन्त्य विचिन्त्य दीर्घमुष्णं च निश्वसन्, निरन्तरपरिवर्तनविकीर्णचन्दनाङ्गरागतराङ्कितशयनतलः, दुःसहदेहोष्मग्लपितोपहारकुसुमः, क्रीडाचक्रवाकैः सममुदश्रुरुन्निद्रलोचनः, क्षपां क्षपितवान्॥

अथ नरवरविरहोष्मनिश्वासग्लपितेव निशा कृशासीत्। निर्निद्रतन्नयननिर्पीतरुचिरिव विच्छायो बभूव निशीथिनीरमणः । विधुंतुदविकटदंष्ट्राव्रणकिणकार्ष्ण्यमिव दृश्यमानं मण्डलवैमल्यबिम्बितमिवाकाशम् अतसीकुसुमनीकाशमुल्बणं चिह्नमुद्वहन्नभजत चरमगिरिशिखरमोषधीरमणः । निधिरपि कलानाम्, निधानमप्यमृतानाम्, अग्रणीरपि सताम्, किमपरम्, वारुणीसङ्गाद्विजपतिरधः पपात । कालकूटगरलकरालशङ्करगलकालीं तमःकञ्चुलीमुद्वहन्ती निस्तलस्थूलतारास्थिमालाधारिणी वारुणीमभिजगाम रजनीकापालिकी। गगनरङ्गस्थलमुपस्थास्नोर्गभस्तिमतो नटस्य लाक्षिकयवनिकालक्ष्मीं बभार वैभातिकी संध्या ॥

क्रमेण च प्रकटलाञ्छनच्छद्मना शर्वरीमुरसि समारोप्यनिधुवनलालस इव चरमगिरिशिखरकाननमवतरति शशलाञ्छने, विघटमानकमलषण्डपरिमलवाहिषु वरयुवतिसुरतश्रमहरणदुर्ललितेषु मन्दमन्दं वहमानेषु वैभातिकेषु मारुतेषु, प्रबुद्धशकुनिकुलकलकलमुखरेषु उद्यानेषु, रागिमिथुनचरमयामसुरतताण्डवनान्दीपटहेषु जृम्भमाणेषु प्रथमेषु कुक्कुटकण्ठकूजितेषु, पर्यायचलितपाणिपङ्कजरिङ्खणवाचालशङ्खकङ्कणासु मन्थन्तीषु दधिमथनलोलदलकपल्लवासु वल्लवाङ्गनासु, समुद्रे-

लरजनिरतिखेदसुप्तासु स्वेदकणनिकरचुम्बितमुखाम्बुरुहासु सुन्दरीषु, मधुमदसुप्तषट्पदासु तुहिनकरविरहशोकगृहीतगरलासु मूर्च्छन्तीष्विव मुकुलायमानासु कुमुदिनीषु, प्रभातसमयभैरवोपहारार्थमरुणेन अंशुपरशुभज्यमानानामन्धकारमहिषाणामतिबहुलरुधिरपूरलोहिन्यामाघातभूमाविव संदृश्यमानायां संध्यारुणायां दिशि शातक्रतव्याम् , सान्द्रतमस्तैलशोषादिव मन्दतेजसि तारकाप्रदीपप्रकरे, प्रातःसवनाहुतिस्वादवल्गदुत्तालकीलेषु ज्वलत्सु यज्वनां गृहे गृहे हव्यवाहेषु, निवासतरुनीडचलितेषु नीडोद्भवेषु, विकचबन्धूकभासि चक्रवाकमिथुनानन्दनाडिंधमे समुत्पतति गगनतलमुदयगिरिशिखराद्तिरभसचलितरथतुरगमुखखरखलीनरवबाधिरितहरिति हरिदश्वे, राजा तु कथंकथमपि निर्वर्त्य तत्कालसमुचितां क्रियाम , आरूढतुरगः कतिपयाप्तजनपरिवृतो विदूषकेण सह मृगयाव्यपदेशी पुनरपि तदन्वेषणाय लीलोद्यानं प्रत्ययासीत् ॥

गच्छंश्च तदा चिन्तितवान्— 'त्रस्तैकहायनहरिणलोचना सा पुनरद्योद्यानमायास्यति वा न वा। समधिगततादृशावस्था सापि कथमिव नाकृष्यते त्रिभुवनैकधन्विना देवेन चित्तजन्मना। अहमपि यथापुरमप्राप्य मतिविहीनताम् , समुचितालापभङ्गिभिस्तां रमयन् , संपूर्णमनोरथो जयामि स-

सहायं शम्बरपरिपन्थिनम्' इति निरन्तरचिन्ताविकल्पकल्पनाकुलहृदयः प्रविवेश लीलोद्यानम् । तदनु 'कुसुमगन्धमेव विकिरति वनपवमानः; न चाङ्गनाङ्गपरिमलम् । मधुमुदितालिशिञ्जितमेव जृम्भते; न हिन्दोलगानम् । सारसरसितमेव कर्णपथमवतरति; न डोलाकिङ्किणीनिनादः । कलहंसकुलक्वणितमेव समुल्लसति; न कङ्केलिताडनचलिततरुणीचरणमणिमञ्जीररणितम् । कोकिलकुलकोलाहल एव समुज्जिहीते; न योषितां लीलालापः' इत्याशङ्कमानः, सङ्गीतभङ्गिविरतिविरसीकृतम्, अधिकपरिम्लानपुष्पोपहारम्, आश्यानचरणालक्तकरसलाञ्छितस्थलम्, केलीविशीर्णाङ्गरागचन्दनपांसुपाण्डराभोगम्, छिन्नहारमुक्ताफलप्रकरशर्करिलम्, अतिरभसविहारपरिभ्रष्टमाणिक्यभूषणमरीचिजालकाकारिताकालबालातपम् आससाद डोलाविहारदेशम् ॥

तत्र तामदृष्ट्वा दृष्टिप्रियंकरां करिणीकरोरुमपगतकरणधृतिस्तत इतो विचरन्, बिम्बाधर इति पल्लवं विमृशन्, हसितमिति पुष्पमवलोकयन्, कुचकलश इति कुसुमस्तबकमीक्षमाणः, रोमवल्लीति मधुकरमालां विभावयन्, संलपितमिति कोकिलकलकूजितं कलयन्, माकन्दमन्दिरेषु माधवीगृहेषु चम्पकवेदिकासु कङ्केलिमूलेषु कामदेवताराधनहर्म्येषु दकुल-

मधुरशालासु तमालभवनशय्यासु चन्दनारण्यविहारवीथीषु द्राक्षामण्टपेष्वन्येष्वपि तरुलतानिकुञ्जेषु अन्विष्य तामपश्यन्नवश्येन्द्रियो नृपतिः, 'हा कष्टमापतितम्। पूर्वेद्युरनुभूतमवलोकनादि स्वप्नविलसितमिव विभाव्यते। हरिणरूपिणा मन्मथेन्द्रजालिकेन दृष्टिविलोभनं तादृगुत्पादितं वा। आहोस्विद्द्विदूषकजिघृक्षुणा राक्षसेन मायाबलेन मद्वञ्चनार्थमेवमुपदर्शितं वा। अतः परं किं करोमि। क्व गवेषयामि। किं कार्यम्। क्व उपायः। का प्रतिपत्तिः। का दिग्गन्तव्या। कं पृच्छामि। कं सहायमुपैमि। का गतिः। हा हतोऽस्मि' इति विलपन्, अदूरत एव पुनरमरमथनशङ्काचकितस्य सलिलनिधेरमृतनिक्षेपस्थानमिव दृश्यमानम्, अनवरतकृतमज्जनोन्मज्जनवरयुवतिकुचकलशमलयजरसधवलितसलिलम्, अश्रान्ततटतरुकुसुममकरन्दस्यन्दकन्दलितकल्लोलम्, उल्लसितसौगन्धिकवनकान्तिकृतकृतकसन्ध्यावलोकनचकितचक्रवाकमिथुनम्, अचिरविकचकमलमधुपानमत्तमधुकरकुलझंकारमुखरम्, अकठोरसरसतामरसमकरन्दपानमुदितसारसरासितसहकृतजलदेवताजघनतटचलितमणिरशनाक्रेङ्कारमधुरम्, अविरतजलचरशकुनिकुलसंचलनचलितफुल्लकह्लारपरिमलपूरपूरितपरिसरम्, अनिलचलिततनुतरतरङ्गडोलारिरंसितकलहंससंसदंसलरववाचालितम्, अम्बुपवनकम्पितप्रतीरकैतकवनधूलिपटलपल्लवित-

बालपुलिनमण्डलाभिख्यम्, स्फारशफरवालताडनचालितकुवलयवनपतितमधुवर्षसतर्षमधुकरनिकुरुम्बम्, अतिमनोहरमखिलेन्द्रियाह्लादनं किमपि कमलसरो दृष्टवान् ॥

तदनु निरन्तरनिपतितपरिमलबहुलकुमुदवनधवलधूलिपटलमेदुरसिकतासु, पवनतरलिततनुतरतरङ्गशिशिरजलकणसेकजनितजडिमसुभगमलयसमीरणताडनचलितसौरभशालिसरसचाम्पेयमञ्जरीजालचञ्चलचञ्चरीकचक्रमदकलझंकारमधुरासु, पल्लवितबालसहकारशाखाञ्चलाविहारितरुणकोकिलपुञ्जचञ्चूदञ्चितकोमलपञ्चमप्रपञ्चवञ्चितपथिकसंचारासु, पञ्चशरकेलिचपलसारसपक्षविक्षेपवीजितराजीवसुरभिरजोराजिधूसरासु, कुसुमितलताडोलाधिरूढवनदेवताचरणमणिभूषणझणझणारावहारिणीषु, विविधतरुकुसुमामोदमेदुरासु, वसन्तवासररमणीयासु, कमलसरसस्तस्य तीरस्थलीषु, तां हरिणलोचनामन्विष्यन् विचचार ॥

तत्र कन्दलितकदलीकाननपलाशश्यामायमानपरिसरेण, संततवकुलमकरन्दस्यन्दशमितवसुंधरारजसा, कन्दर्पाकर्षणमन्त्रायमाणकोकिलकुलकोलाहलवाचालितमाकन्दबृन्देन, तरुणतमालषण्डरेखापरिवेषसनाथेन, गन्धहरिणकण्ठकण्डूतिकषणमसृणकम्प्रकोमलचम्पकप्रकाण्डेन, पञ्चवर्णशुकमुखख-

ण्डितपरिणतमातुलुङ्गफलरससेकातिम्यद्भुवा, परस्परकलहाय-
मानकपिञ्जलकुलचञ्चलगरुदनिलचारुचलितमाधवीस्तबकेन,
मधुमदतरलषट्चरणचरणताडनविशीर्णसरसपुंनागपरागसुर-
भिणा महता पादपप्रकरेण परिवृतम्, वासभवनमिव वसन्त-
स्य, कमनीयं कमपि लतामण्टपमपश्यत् ॥

तस्य च मध्यभागे निरन्तराङ्गपरिवर्तनविशीर्णचन्दनाङ्ग-
रागधूलीधूसरम् , स्तनावरणतरुणतामरसपलाशशतमर्मरता-
ख्यातमन्मथतापज्वरातिशयम् , प्रबलदेहोष्मव्यतिकरम्लानसु-
कुमारकर्पूरकिसलयतालवृन्तम्, तापतरलचरणतललुलितहि-
मजलकृतहरिचन्दनपङ्कवेदिकासनाथम् , तापविवर्तितमुख-
विभिन्नकर्पूरताटङ्कशकलदन्तुरितम् , तदात्वसंत्रुटितमेखलाक-
लापनिपतितमुक्ताफलप्रकरतारकितम् ,सातिशयतापसंपर्ककर्बु-
रिताभरणमृणालनिकरम् , ऊष्मलकुचतटमिलनधूसररुचिपरु-
षकर्पूरहारशकलसंकुलितम् , निर्भरमकरन्दबाष्पवर्षिभिः पु-
ष्पेक्षणैः परिसरवल्लीभिः सान्तस्तापमिवेक्ष्यमाणम् , समीपव-
र्तिन्या सरस्या च समुद्गततरङ्गभ्रूलतैः सरसीरुहनेत्रैरिवालोक्य-
मानम् , कलितशोषविरसकह्लारकुमुदकुवलयदलपरिगतम् ,
लुलितलुलितं किमपि शयनीयमद्राक्षीत् ॥

दृष्ट्वा च मनस्यकरोत्— 'इदमीदृशं शयनीयमत्र सं-

दृश्यते; कथयति च मदनपरवशायाः कस्याश्चित् दुः-सहं देहसंतापम्। तथा हि—त्रिचतुरदिवसोद्गतान्यपि शयनीयतामुपगतानि वल्लीपल्लवानि दुःसहदेहदाहोष्मशुष्काणि जीर्णपर्णानीव पवनसंस्पर्शेषु वहन्ति मर्मरारावम्। एते च शय्यापल्लवप्रतिमापाटलिताः परिवर्तनत्रुटिता मौक्तिकाहारास्तीव्रतरदेहोष्मसङ्गादङ्गारतामुपगता इव विभाव्यन्ते । तापोष्मलचरणतलस्पर्शेन बहुधा विभिन्नान्तरमिदमालक्ष्यते सरसमपि चन्दनपङ्कवेदिकावलयम् । एतानि च मृणालभूषणानि दुर्विषहेण तापेन शुष्यन्ति मूर्छितानीव वमन्ति मुखेन फेनजलम्' इति विचिन्त्य, पल्लवशय्यापरिसरभुवि विचरन्, चन्दनहिमजलहिमवालुकाधूलिजालशैवालदलतालवृन्तप्रभृतीनि तानि तानि शिशिरोपचारद्रव्याणि च ददर्श । 'स्मरपरितापशसिनी किसलयशय्येयमस्या एव' इति निश्चितधिया कस्या इति च संदिहानेन चेतसा विचिन्त्य, तत इतः पश्यन्नन्तिकभुवि विचित्राकृति किमपि चित्रफलकमद्राक्षीत्॥

तदनु कौतुकविस्तारितेन चक्षुषा प्रथममम्बिकापत्रहरिणलाञ्छनरेखासनाथवदनचन्द्रमसम्, तदालिङ्गनसमयसकलितस्तनवलयमलयजसुरभिधूलीविसरम्, तरुणबन्धूकरुचिराधररुचिरेखानुमापितहृदयगतरागसागरतरङ्गशकलोद्गमाविभ्र-

मम् , नयनचकोरचन्द्रिकायमाणसर्वाङ्गीणकान्तिरमणीय-म् , सविधतरुकुसुमनिकरपतितमधुशीकरासारशारितशरीरतया तदात्वसमुदितान्स्वेदबिन्दूनिव धारयन्तम् , निष्पन्दसर्वावयवतया तदवयवध्यानसंततिस्तिमितमिव दृश्यमानम् , प्रणयरसासङ्गसमये तदीक्षणादश्रुणा सह पतितमञ्जनबिन्दुमाश्यानं तत्कालजृम्भितविरहानलधूमकन्दलमिव हृदयेन दधानम् , दुर्वारमदनशरतापमूर्च्छितमिवानिश्वासमाननमुद्वहन्तम् , दिशन्तमिवात्मसारूप्यमनुकूलहृदयां तामपि राजकन्यकामारचयितारम् , तत्करकिसलयकल्पनाश्लाध्यम् , तच्चिन्ताविषयमहनीयम् , तदीक्षणास्पदभावबहुमन्तव्यम् , तदङ्गसंमेलनधन्यम् , मधुमधुराकृतिं युवानमालोकयतः पार्थिवसार्वभौमस्य पस्पर्श विस्मयो हृदयम् ॥

तदनु पुनरपि बलवदालोक्य हर्षपरवशः, तमात्मानमेव जानन्नप्यजानन्निव, 'कोऽयमालिखितः पुमानत्र । निरूप्यताम्' इति विदूषकस्य दर्शयामास चित्रफलकम् । सोऽपि तदादाय विस्मयविकासिना विलोचनेन पुनः पुनरीक्षमाणो ज्ञातार्थतया प्रीतिमन्तर्गतामतिमहतीमाननप्रसादेन व्यञ्जयन्निदमुवाच— 'राजन् , अन्विष्यमाणा वल्लरी पादलग्ना बभूव । मरुभुवि तृषितस्यानभ्रममृतवर्षमिव स्वयमुपनतमेवं दैवात्तव मनोरथ-

फलम् । यस्मात्सकलनयनानन्दसंदायिसौन्दर्यस्त्वमेवात्र तया राजकन्यया लिखित इति मे हृदयस्य नेदीयानेव निर्णयः । दर्पणदृष्टस्य अस्य च त्वत्प्रतिबिम्बस्य अवयवसादृश्यमपि संवादीति त्वयापि ज्ञायत एव। सा तु समधिकतापवेगा नागनासोरूस्त्वद्दर्शनसिद्धिकाङ्क्षिणी लीलावनमिदमासाद्य सखीभिः समम्, अपरिणतमनोरथफला, पश्चादनुबभूव यादृशीं वेदनाम्; इयमनक्षरमाख्यात्येव तादृशीं तां पल्लवशय्या शोषिणी । अमूनि च विवृण्वते तस्याः प्रतिक्षणसङ्गिनीं पञ्चशरतापमूर्च्छां चन्दनजलसिक्ततरुणतामरसपलाशतल्पादीनि शिशिरोपचारोपकरणद्रव्यजातानि । दृश्यन्ते च मूर्च्छितायास्तस्याः शिशिरोपचारकरणसत्वराणां सखीनामावेगविसंस्थुलाः प्रसवधूलिलग्नाः पादावलयः । कन्दर्पहतकेन कष्टां दशामारोपिता, चेतनास्खलनाच्चात्र फलकस्थितिमप्यनाकलयन्ती, आवेशविवशा, अभिशङ्किनीभिः सखीभिर्ध्रुवमियमात्मभवनमानीता; अन्यथा स्वहृदयादपि वल्लभस्यास्य चित्रफलकस्य विस्मृतिः कथं घटते' इति ॥

ततो राजा सविषादमब्रवीत्—'तदानीमपि तां क्षणमक्षिपथे निधाय तत्क्षण एव राक्षसोदन्तमुत्पाद्य विघटयता, सांप्रतमपि किमप्यावेगकारणमापाद्य दर्शनपथाद्दूरमपनयता;

सर्वथानेन दैवदुर्विपाकप्रपञ्चेन वञ्चितोऽस्मि । अहो, मनो मम भवति किंकर्तव्यतामूढमन्धंकरणम् , यस्मादस्यापि तदन्वेषणे कौतुकप्रबन्धस्य विधिना विरतिरुपपादिता । अतः परं दर्शनोपायस्य का पदवी ' इति जल्पंस्तदा प्रतापितमदनास्त्रखण्डितहृदयः, हृदयगतां तामेव निवेशयितुमुपर्युपरि निष्पतता निश्वासतरङ्गेण ताडिताधरः, तदन्वेषणोपायचिन्तास्तिमित इव मुहुर्मुहुः स्तम्भमाभजन् , स्मरशरपक्षमारुताहत इव कम्पमानाङ्गः, तदभिमुखचलितहृदयतयेव प्रतिक्षणं चेतनाशून्यत्वमुद्वहन् , तत्रैव लतामण्डपे पपात ॥

कन्दर्पसायकखण्डितहृदयं मुह्यन्तमन्तःस्थितदयिताध्यानमिवाचरन्तं तं प्रस्विन्नभुजान्तरप्रतिबिम्बितानासन्नसहकारकुसुमनिकराननङ्गशरानिव हृदयलग्नानुद्वहन्तम् , अत्यायतैरधिकतरोष्मभिर्निश्वासैरनङ्गज्वरातिशयमनक्षरमाचक्षाणम् , अदृष्टपूर्वमिव विभाव्यमानम् , सास्रयोश्चक्षुषोः समधिकेन शोणिम्ना हृदयोत्कूलितं रागमिव बहिरुद्वमन्तमवनिपालमालोक्य, 'हा हा किमिदमापतितम् । अनङ्गचण्डालेन खण्डितधैर्यो बभूव पर्वतस्थिरप्रकृतिरपि सकलभुवनरक्षाधुरंधरो वसुंधरारमणः । अहो सहजदर्पस्य कन्दर्पस्य दुर्निवारता, यत्समर्यादमम्भोधिमिव प्रकृतिगम्भीरं पार्थिवमप्येवमाकुलीकरोति । प्रा-

येण प्रलयार्णवमध्यपतितमहीधरोद्धरणदक्षो महावराहोऽपि न शक्नोति रागसागरनिमग्नमुद्धर्तुं निजहृदयम। द्वादश रवयोऽपि न प्रभवन्ति रश्मिभिर्दुरधिगम रागकर्दमं शोषयितुम्' इति चिन्तयन्, सरभससमाहृतैः सुरभिमकरन्दस्राविभि· सान्द्रगर्भपरागबन्धमृदुभिः कमलकुमुदकुवलयकल्हारदलैर्विरचिते शयने शाययन्, करतलमृदितसरसहरिचन्दनकिसलयसारेण चर्चयन्सर्वावयवान्, शिशिरजलकणमुचा नवनलिनीपलाशतालवृन्तेन वीजयन्, सविधतरुवल्कलविवरादादाय कर्पूरशकलानि संचूर्ण्य क्षिपन् उरसि, अन्तरान्तरा मकरन्दलववर्षिणीभि· पाटलीकुसुममञ्जरीभिः संचारयन् पवनमानने, शनैः शनैरपगतमूर्च्छमकरोदवनिपालम् ॥

तस्मिन्नेव समये सख्या मदनतापवैचित्त्याविस्मृत चित्रफलकमादातुकामेन मनसा सत्वरपदमापतन्ती, सरभसगतिवशचलितमणिरशनारणितवाचालनितम्बमण्डला, विषादविच्छायेन मुखेन महान्तमन्तर्गतमावेगमपरोक्षयन्ती, प्रत्यग्रपल्लवपाटलाधरा कुसुमस्तबकाभिरामकुचयुगला मधुकरमालानीलालका परभृतालापमधुरभाषिणी साक्षाद्वनदेवतेव लक्ष्यमाणा, परिचारिकाद्वितीया, तस्याः सखी समाजगाम ॥

तां दूरत एव दृष्ट्वा पार्थिवकुमारोऽपि कुसुमशयनात्सरभ-

समुत्थाय तामालोकयन्, विदूषकमेवं हर्षनिर्भरमवादीन्—'सखे, समुच्छ्वसितमिव चेतसा, परिणतमिव भागधेयेन, फलितमिवानन्दद्रुमेण, विभातमिव विरहदुर्निशया, यतश्चन्द्रिकेव चन्द्रकलायाः, सरसीरुहसंपदिव शरदः, चन्दनलतेव मलयगिरिभुवः, तस्याः स्वयममुक्तपार्श्वा स्वहृदयनिर्विशेषा सखीयम्' इति वदति महीभृति, सापि तमवनीपालमाकुलमालोक्य, मदनकृशायास्तदवयवशोभायाः सख्याः सौभाग्यलक्ष्मीं बहुमन्यमाना, समुपेत्य सविनयमंसस्रंसमानावतंसमनंसीत् ॥

धरणिपतिस्तु सादरमेवाङ्गीकृत्य भूयस्तस्मिन्नेव कुसुमशयने समुपविष्टः, समीपे तामुपवेश्य, प्रणयपेशलमवादीत्—'आयुष्मति, अपि कुशलिनी ते सखी ससखीजना' इति। ततः सा सविनयं विज्ञापयामास— 'कथमिव कुशलिनी सा प्रत्यक्षतः प्राणिनः प्राणरक्षाधुरंधरे त्वय्यप्रसन्ने' इति। तदनु विदिततदभिप्रायो विदूषकः 'सकलभुवनसार्वभौमः पादपीठायमानलक्ष्मीकरकमलो भुजबलभीमः प्रोल्लभूपाल. प्रकृत्यैव विश्वरक्षादीक्षितः, किमुत हृदयरुचिते जने। विश्वंभरापालमौलिमालामकरन्दबिन्दुवर्षसुरभितचरणासनः पृथुदशरथभगीरथप्रतिमः साक्षाल्लक्ष्मीसमुच्चार्यमाणजयशब्दो महाराजोऽपि दिष्ट्या युष्मत्सख्याः सौभाग्यविलसितेन वशीकृतो

मन्मथकृशो दृश्यमानशिशिरोपचारविधिस्तदीयं कुसुमशयन-माधिशेते' इत्यभिहितवान् ॥

तच्छ्रुत्वा प्रतिक्षणं प्रीतिद्रवार्द्रीकृतेन मनसा मुहुर्मुहुरानन्दसागरमवगाहमानां विस्मयोत्तानितेन चक्षुषा विलोकयन्तीं विनयविनमितोत्तमाङ्गं पुनः पुनः प्रणमन्तीं च तां पार्थिवः प्रणयपेशलया गिरा बभाषे— 'कथय भद्रे, तव सख्याः कुशलेतरस्य कारणम्' इति । सा तु सविनयमवादीत्— 'तद्विदितमेव देवेन' इति । ततो राजा जगाद— 'इयं कस्याः' । सा उवाच— 'अवधार्यताम्, आदितः प्रभृति कथयामि— अस्ति खलु दक्षिणापथे जयकुञ्जरकरटतटगलितमदसलिलासारपङ्किलराजमार्गा, सदातनभूतपतिललाटदृगनलदह्यमानदनुजतृतीयपुरजाम्बूनदाम्बुस्नपितमिवाद्यापि काञ्चनमयप्राकारकान्तिभिर्गगनतलं दर्शयन्ती, पुण्यकृतामधिवासभूमिः, विक्रमसिंहाभिधाना नगरी । तत्र खलु जागर्ति सुत्रामधामा, सुरकुञ्जरशुण्डापीवरबाहुदण्डः, शास्त्रविद्यापारदृश्वा, विश्वम्भरोद्वहनलीलाविदग्धः, चतुर्थान्ववायचक्रवर्ती तुरगखुरमुखमुद्रितसमुद्रवेलावनिः, उद्घट्टितरिपुबलतुक्खारघट्टो भूपतिर्नाम । स खलु बहुजननसुचरितैस्तपोभिः संतोषितेन भगवता स्कन्ददेवेन दत्तामनन्तगुणलक्षणामनन्ताख्यां सुतां

लेभे । सा पुनरतिक्रम्य शैशवमिक्षुलतेव यौवनेन माधुर्यमु-
द्वहन्ती, चन्द्रकलेव वर्धमाना, नयनसंवननलावण्या, भुवन-
वशीकरणविद्येव पुष्पबाणस्य, संचारिलतामयमिव मूर्तिभिर्ध-
रणीतलं दर्शयन्तीभिः, अपाङ्गवीक्षितैरनिशविकासिनीं कुव-
लयवनीमिव दिक्षु विक्षिपन्तीभिः, भ्रूलताविकासैः स्वेच्छा-
नतिभाञ्जि संमोहनकार्मुककदम्बकानीव कलयन्तीभिः, अति-
सुरभिनिश्वासैः सर्वर्तुसुलभं मन्दारतरुकुसुममिव वमन्तीभिः,
लीलाविक्षेपविसर्पिणीभिः कोमलकरतलच्छविभिरवल्लीसंभवं
पल्लवनिकरमिव वर्षन्तीभिः, विविधमणिभूषणद्युतिभिरमेघस-
मयापेक्षीणि इन्द्रायुधसहस्राणीव जनयन्तीभि , हर्षविकस्व-
राभिराननकान्तिभिर्विभ्रमसहचरीमम्बुरुहवृत्तिमिव वियति
तन्वतीभिः, आज्ञासिद्धिभिरिव शम्बररिपोः, सफलीकृतयौव-
नाभिः सहस्रसंख्याभि. सखीभिः परिवृता, लीलोद्यानमिदमुप-
गम्य वसन्तोत्सवडोलया चिरं विजहार। तदानीमनङ्गमिव पु-
नर्देहवन्तममानुष लोकसुलभरूपसंपदं देवमागतमानन्दलुलिते-
न निर्निमेषेण लिखितेनेव चक्षुषा विलोकयन्त्या विस्मृतविहार-
कौतुकाया देव एव जानात्यनन्यसंवेद्यरसां तादृशीं स्थितिं
तस्याः ॥

ततो राक्षसगृहीतस्य करुणमाक्रन्दनमाकर्ण्य कस्यचित्,
आर्तजनत्राणपरायणे त्वयि गतवति, राक्षसोदन्तभीताभिः

सखीभिरनिच्छन्त्यपि कथं कथमपि नीयमाना, पुनः पुन-स्तामेव दिशमवलोकयन्ती, मलयपवनचलितशिखाभिर्लताभिः 'तादृशमुन्मुच्य तरुणम् . अयि मुग्धे मा कृथा गमनसाहसम्' इति शिरोविधूननक्रियया निवार्यमाणेव, चलितकिसलयाङ्गुलिना सहकारेण 'हृदयरुचिरं जनमपास्य गन्तुमसांप्रतम्' इति क्रियमाणगतिनिरोधसंज्ञेव, तरुशिखरमारुह्य कुसुमशराह्वानसंज्ञाध्वनिमिव कुर्वता कोकिलकुलेन कूजता पर्याकुलीकृता, स्थलस्खलनेषु परिजनयुवतिपाणिशङ्कया परिसरवल्लीपल्लवानवलम्बमाना, हृदयगतदेवगौरवेणेव मन्दमन्दानि निक्षिपन्ती पदानि, स्वनता च कर्णावतंसमधुकरकदम्बकेन 'मूढे न याहि । पुनरपि तदालोकनेन कृतार्थय मदनपरवशमात्मानम्' इति कर्णे हितवचनमिव कथ्यमाना, निरायतनिश्वासपातितसंव्यानांशुकतया स्तनावरणीकृतेन पाणिना त्वत्प्रतिबिम्बविरहवेदनातरलं हृदयमिव प्रकृतौ स्थापयन्ती, स्तनान्तरपातिनी क्षरितकुङ्कुमरागशोणां स्मरशरदलितहृदयरुधिरधारानुकारिणीं स्वेदसलिलधारां दधाना, प्रतिक्षणविचारविनम्रानना, स्तनतटगतेन वदनप्रतिबिम्बेन त्वदवयवध्याननिरतस्य हृदयस्य कमलोपहारमिव कल्पयन्ती, मकरकेतुकेतनपटमारुताहतेव वेपमाना, शनैः शनैः शून्यशून्येन मनसा कन्यान्तःपुरमाससाद ॥

आसाद्य च विसर्जितसखीजना, द्वारदेशनिरुद्धपरिचारिकाप्रवेशा, अद्वितीया, रजतगिरिशिखरसमुन्नतम् अनिलचलद्ध्वजपटपवनताडितजलधरपटलमधिरुह्य सौधशिखरम्, अतिसुरभिमलयजरससेकशिशिरायां कदलीगर्भदलसुकुमारकौशेयनिचोलकप्रावृतोपधानायाम् आस्तीर्णधवलप्रच्छदपटायाम् उदीचीनवातायनसविधचन्द्रकान्तमणिवेदिकायामुपविश्य तेनैव जालमार्गेण तामेव दिशमीक्षमाणा, दुग्धजलधिकल्लोलधवलैर्दृष्टिपातैस्तदेव केलीवनममृतपूरेणेव प्लावयन्ती, उपवनमरुदुद्धूयमानां तत्रत्यपादपकुसुमपांसुपटलीम् अनुपदमारचितधाटीसंनाहसंभ्रमस्य शम्बररिपोः सेनारेणूद्गतिमाशङ्कमाना, समधिकलावण्यसारेण त्वया समन्मथमिव लीलावने निवसन्तं वसन्तमाकलयन्ती, कौबेरीमपि त्वत्सनाथतया मान्मथीमिव दिशं मन्यमाना, 'मूढे राजकुमारि, तिष्ठत्ययमत्र हृदयरुचितो जनः। किमर्थमसि गता' इति कोकिलकोलाहलवाचा लीलावनेन चलितकिसलयाङ्गुलीभिः शाखाभुजाभिरिवाहूयमाना, मुहुरुपधानोपरि विमुक्तसकलदेहभारा, मुहुर्गवाक्षमणिकवाटशिखरविन्यस्तवामहस्तपल्लवा, मुहुर्वातायनदेशविनिहितवदनारविन्दा, मुहुः करतलनिवेशितकपोला, किमपि चिन्तयन्ती, कपोलसङ्गि करतलम् अविरलपतितसाञ्जनाश्रुबिन्दुशारं रक्तकमलभ्रमनिलीनभ्रमरनि-

कुटुम्बमिव दर्शयन्ती, हृदयपतितमदनपावकास्त्रधूमकलना-
दिव बाष्पाकुलारुणे दृशौ दधती, दीर्घदीर्घेण निश्वासेन
निपतितसंव्यानयोः स्तनयोस्तदामोदपातिना भृङ्गमण्डलेन
नीलांशुकावरणमिव निर्मिमाणा, त्वदाह्वानमदनशासनलेखा-
भ्यासमारचयन्तीव कररुहेण मणिकुट्टिमे विलिखन्ती, कर्ण-
पूरकुसुममञ्जरीमधुकरकुलपक्षपवनवीजनेऽपि भृशखिन्नां क-
पोलस्थलीं दधाना, मुहुरुन्नमितयैकया भ्रूलतया त्वदानयन-
निदेशसंज्ञामिव कन्दर्पस्य कलयन्ती, चिन्ताकुला, पुनः पुन-
रनिबद्धलक्ष्यमूर्ध्वमालोकयन्ती, सुचिरमवतस्थे ॥

अस्मिन्नेव समये सततपतदश्रुताम्रनयनाम्, उत्कम्पित-
स्तनं निश्वसतीम्, अन्यामिव वैवर्ण्येन लक्ष्यमाणाम्, निर-
र्गलस्वेदवर्षिणीं विलीनामिव मदनानलेन, व्यपगतनिमे-
षेण चक्षुषा लीलावनमिदमेव मुहुर्मुहुर्विलोकयन्तीं तामुद्वीक्ष्य,
निरङ्कुशातङ्कवेपमानहृदयाहमवोचम्— ‘अयि विचेतने, कि-
मर्थमेवमविच्छिन्नधारमश्रु विमुच्यते । किं कारणमुत्कम्पिता-
धरदलमुपर्युपरि निष्पततोऽस्य निश्वासप्रबन्धस्य । किं नि-
मित्तममूनि प्रकृतिकोमलान्यङ्गानि म्लानिमुपगतानि । को
हेतुरमुष्य दुर्वारस्य शोकस्य । यद्यहमबाह्या तवेङ्गितस्य,
कथय शोकहेतुम्’ इति मयाभिहिता सा बाष्पसलिलविलु-

लिततारकेण चक्षुषा मां विलोक्य, दीर्घमुष्णं च निश्वसती, गद्गदिकागृहीतकण्ठा, लज्जाविशीर्यमाणाक्षरमवादीत्—'सखि, किमस्ति गोप्यं तव प्राणेभ्योऽपि वल्लभायाः । तव समक्षानुभूतस्य वस्तुनः पुनरुक्तभूतेन किं कथनेन । तथापि मदिङ्गिताकारज्ञानकुशला त्वमितरेव मां यदप्राक्षीः; तेन शिथिलितलज्जा गुरुतरशोकलङ्घनाय वदामि । श्रूयताम्; ननु नारायण इवाविष्कृतभुजद्वयः, पुनरवतीर्ण इव पुष्पधन्वा, मनुष्यलोकदुर्लभेन लावण्यपूरेण सिञ्चन्निव दश दिशामुखानि, दिनकरपरिभाविना तेजसा लिम्पन्निव चक्षूंषि, कोऽपि राजकुमारो लीलावनमहीमलंचक्रे ॥

मधुकरीव पुष्पिते बालसहकारे, तस्मिन्नासेचनकदर्शने यूनि ससञ्ज सर्वात्मना मे मनःप्रवृत्तिः । तेन सौन्दर्यरज्ज्वा निबध्य बलवदाकृष्टहृदया केवलं शरीरमात्रेण तिष्ठामि । तादृशं नयनमधु क्षणमक्षिपथे निधाय, तत्क्षण एव क्वापि निनाय विधिर्विप्रलम्भकः । स खलु मदिरया विना परिणतो मोहनप्रकार इव हृदयमवशीचकार । अनभिज्ञातकुलशीलनामधेयस्तादृशनयनसंवननलावण्यो नरपतिकुमारोऽपि दैवदुर्विलसितेत विश्लिष्टो जातः । इदानीमव्याजकुपितेन अनङ्गचण्डालेन खण्डितहृदयायाः कालातिपातनिःसहवेदनावती

ममावस्था । तद्दर्शनमन्तरेण विषमेषुविषधरदष्टाया मे नान्य-दस्ति भैषज्यम् । कथमिव घटते मे मन्दभाग्यायास्तादृशस्य पुंस पुरार्जितसुकृतशतलभ्यं पुनर्दर्शनमिति चिन्तयन्ती, लज्जया तवापि निवेदयितुमसहा, किंकर्तव्यतामूढा, केवलं तदुद्यानमवलोकयन्ती, बाष्पमुत्सृजामि' इति ॥

ततोऽहमवादिषम्— 'अयि कल्याणाभिनिवेशिनि, नारायण इव लक्ष्म्या सर्वभुवनप्रशस्ये तादृशे राजनि बद्धस्त्वया राग इति भूयस्तरां श्लाघ्यसे । सोऽपि तव सौन्दर्यातिशयेनावर्जितहृदयः, स्वेदवता पुलकवता वेपथुमता च वपुषा शंसन्मदनपारवश्यमात्मनः, तदा तस्थौ । तस्मात्स एव पृष्ठतः प्रेर्यमाण इव मकरकेतुना, भूयोऽपि समागत्य केलीवनम्, आकुलकरणस्त्वां विचेष्यति । स तु राजकुमारः पुण्डरीकाक्षसदृक्षः । त्वं च लक्ष्मीसदृशलावण्या । एवममानुषसुलभलावण्ययोरन्योन्यसदृशयोर्युवयोः सकलभुवनकुशलाय संगमः सहसा भवेदेव' इति मया व्याहृता विकसितलोचना किंचिदुच्छ्वसितवती ॥

ततः संक्रामिततापः इवास्याम्, चरमदिशि मन्दोष्मा पपात वासरेश्वरः । प्रत्यग्ररविविरहशोकेन मूर्च्छन्तीष्विव मुकुलीभवन्तीषु कमलिनीषु, तस्या हृदयोल्लसितविरहानलधूमकदम्ब-

केनेव तिमिरेण मलिनीकृतासु दिक्षु, दिनकरविरहिताया दिवः प्रस्वेदबिन्दुष्विव स्फुरत्सु तारकाचक्रवाकेषु, तदुपरि विमुक्त-बहुविधमदनशरपक्षमरुतीव तत इतः संचरति संध्यामातरि-श्वनि, तद्विरहवेदनावलोकनोन्नमिते वदन इव रजन्या जृम्भ-माणे शिशिरकरबिम्बे, कर्पूरधूलीधवलत्विषि दिशि दिशि पतति तुहिनकरकिरणजालके, कथमपि सा निर्वर्तिततत्काल-समुचितक्रियाकलापा, कन्दर्पकलुषा, चिन्ताशतशिथिलहृदया, शयनतले निपपात ॥

शयनगता च चन्द्रमसं विलोक्येदमब्रवीत्— 'नूनमस्य चन्द्रहतकस्य कालकूटकालानलकालरात्रिमृत्यव एव रूपनि-र्माणद्रव्यपरमाणवः, अन्यथा तीव्रतरतरणिकिरणदुःसहाः प्रा-णवैरिणो भवन्ति कथमस्य मूर्च्छाविधायिनो रश्मयः। हन्त चन्द्रकन्दर्पवसन्तमन्दपवनेष्वेकैक एव विरहिजनप्राणखण्डने विदग्धः, किमुत समवायः। समुल्लसति विरहिपरिपन्थिव-र्गेऽस्मिन्, आत्मनः कथमसुपरित्राणगणना' इति ब्रुवाणा, चन्द्रातपेऽपि तापम्, मलयपवमानेऽपि घर्मजलम्, मन्मथ-शरकीलनेऽपि तारल्यम्, अश्रुप्रवाहमज्जनेऽपि शोषम् आबि-भ्रती, हारतरलपद्मरागप्रभारुणितानि मुक्ताफलानि प्रब-लदेहोष्मभिरङ्गारतामुपगतानीव सिञ्चन्ती निरन्तरेण नेत्रा-

म्बुना, स्वेदिनि वपुषि शयनपरिवर्तनलग्नानि पुष्पाणि सर्वाङ्गपतितानि शम्बरशासनशरजालानीव धारयन्ती, मुहुर्मुहुरालिङ्ग्यमानां चन्द्रकिरणसंपर्कसमुद्गतसलिलां चन्द्रकान्तमणिपुत्रिकां दु:सहनिजतापज्वरोष्मव्यतिकरस्विन्नामिव दर्शयन्ती, उपरिपरिदृश्यमानविततमुक्तागुणौ स्तनकलशौ त्वदालिङ्गनसुखालाभशोकादुद्बन्धनोद्युक्ताविति पाणितलेन निरुन्धतीव हृदि विन्यस्तहस्ता, चन्द्रम:प्रतिमाप्रवेशनिवारणकञ्चुकमिव कपोलेन रोमाञ्चमुद्वहन्ती, 'अङ्गणसहकारकोकिलरवदह्यमानं श्रवणपुटं सिञ्च हिमाम्बुना शिशिरेण' इति मुहुर्मुहुर्मां व्याहरन्ती, परिचारिकयेव प्रबलया वेदनया गृहीतसर्वावयवा, केवलं भवदागमनप्रत्याशया बलात्प्राणानवलम्ब्य कुसुमशरशरपञ्जरगता, तापमवाप शातोदरी। एवमतिदु.सहां विरहवेदनामनुभवन्ती, कामशरखण्डिताङ्गी, कण्ठगतासु:, उदश्रु:, उन्निद्रलोचना, कथं कथमपि कल्पशतायमानां क्षपां क्षपितवती।

क्रमेण च तस्या निसर्गनिर्मले हृदय इवाबद्धशोकानलधूमकलुषे चरमगिरिशिखरमवतरति समुन्मिषदङ्के शशाङ्कबिम्बे, शशधरविरहादिव संध्यापल्लवशयनसङ्गिन्यां रजन्याम्, रजनिमखिलां राजसुताविरहवेदनाविलोकनखिन्नेषु नयने-

ष्विव भवनस्य घूर्णमानेषु मन्दालोकेषु मङ्गलप्रदीपेषु, क्षण-
दाकरविरहक्षामायाः क्षपायाः शयन इव म्लानतारकाकुसुमे
वियति विभाव्यमाने, विघटमानकमलषण्डपरिमलवाहिनि
तुहिनजललवमुचि वाति वैभातिके मरुति, उत्तराशान्तावल-
म्बिनि व्यत्यस्तरूपे विलोक्यमाने सप्तर्षिमण्डले, पिण्डालक्त-
कशोणशोचिषि जृम्भमाणे राजीवजीवातौ भगवति लोकैक-
चक्षुषि, कथंचिद्विरचितवैभातिकानियमा, मन्मथसंतापकृशा,
कृशोदरी सा, मत्करावलम्बिनी शृङ्गारलक्ष्मीशेखरकमलाय-
मानयोररुणाङ्गुलिदलयोश्चरणयोस्त्विषा स्फाटिकीमपि सोपा-
नस्थलीं पद्मरागमयीमिव दर्शयन्ती, शनैः शनैरवतीर्य सौ-
धशिखरात् ,तत्क्षणोपनीतामिन्द्रनीलमणिशिबिकां सौदामिनीव
कादम्बिनीमधिरूढा, सविधविधूयमानचामीकरदण्डधवलचा-
मरचतुष्कशोभिनी, चामरमरुदान्दोलितकुटिलकुन्तलाग्रा, ब-
हुलबहुलेन माणिक्यमरीचिजालेन मयूखाङ्कुरानपि बालतप-
नस्य रञ्जयन्ती, शरदिन्दुकान्तिधवलेन विततविद्रुमदण्डो-
द्भासिना विधुंतुददशनव्रणनिपतत्स्थूलरुधिरधारासनाथामभू-
तपूर्वामैन्दवीमभिख्यामुद्वहता मुक्तातपत्रेण निवार्यमाणातपा,
परितः प्रसर्पता मुक्तातपत्रस्य प्रालेयपिण्डपाण्डुना प्रभाच-
क्रेण परिगता क्षीरोदमध्यगतलक्ष्मीश्रियमुपजनयन्ती, प्रति-
क्षणाध्मातेन पुरतो मन्द्रमधुरं क्वणता मणिकाहलेन निःस-

पत्र रागराज्यप्रवर्तनमिवात्मनः ख्यापयन्ती, तत्कालसमुपगताभिः सरभसगतिवशचलितमणिनूपुररणितवाचालचरणारविन्दाभिः पृथुलनितम्बस्थलस्खलितमणिरशनाक्रेङ्कारमुखरपरिसराभिरात्मनिर्विशेषवेषधारिणीभिः सहस्रसंख्याभिः सखीभिः परिवेष्टिता, कनककलशकलाचिकाताम्बूलकरङ्कतालवृन्तमुकुरपतद्ग्रहमञ्जूषावसनगन्धमाल्यप्रमुखपरिबर्हधारिणीभिः प्रसाधनवतीभिः परिचारिकाभिरनुगम्यमाना, दक्षिणपवनप्रेर्यमाणेनेव पुरतो धावता हृदयेनाकृष्यमाणा, त्वदन्वेषणकौतुकिनी, विहारव्याजाल्लीलावनमिदमाजगाम ॥

आगम्य च भृशमुदीर्णकन्दर्पा, कपोलतलप्रतिबिम्बितासन्नलतापल्लवतया निरन्तरनिपतितनयनजलपूरसेकात्किसलयिनीरिवपत्रवल्लीर्दर्शयन्ती, पुनरपि त्वत्प्रतिबिम्बग्रहणवाञ्छयेव दीर्घदीर्घेण निश्वासेन स्तनान्तरगतानि चन्दनरजांसि धून्वती, स्वलोचनचषकनिपीतत्वदाननसौन्दर्यमधुमदातिशयेनेव कम्पिताङ्गी, परिसरलतासु त्वत्सम्बन्धिवृत्तान्तप्रश्नपरेव वेपथुवेगताडितं स्फुरन्तमधरमुद्वहन्ती, समाससाद डोलाविहारदेशम् । ततः कौतुकविस्तारितेन चक्षुषा विलोक्य तत्र त्वामपश्यन्ती तत्क्षणोद्भूतविषादकलङ्कविनीलवदनचन्द्रमण्डला, त्वद्गतिविचयनाविनिर्गतहृदयेव कर्तव्यमपरमजानती, हृदयगत-

त्वद्दिदृक्षयेव विनामितेनाननेन किमपि विचारयन्ती, विलिखितेव निश्चलसर्वाङ्गी, क्षणं तस्थौ। ततः 'त्वच्चरणकमलस्पर्शधन्येयम्' इति त्वदध्युषितां स्थलीं सस्पृहमीक्षमाणा, 'त्वन्नयनविलोकनविषयो बहुमाननीयः' इति तरुणसहकारमालोकयन्ती, 'त्वत्प्रतिबिम्बलाभचरितार्था' इति माणिक्यदोलां मन्यमाना सा, भवदन्वेषणाय बलवदावेगविसंस्थुलपदा, शनैः शनैश्चचार॥

ततः कामकदर्थनदूनामेनां मीनाक्षीं विलोक्य, विदिततदभिप्रायाहमवोचम्— 'सखि, तदा त्वदङ्गसौभाग्यदर्शी स राजकुमारोऽपि मन्मथविकृतिसूचकानि चिह्नानि दर्शयन्नेव दैवदुर्विलसितेन दर्शनमार्गस्य दवीयान्बभूव। ध्रुवमेनमानेष्यत्येव लीलावनमिदमपक्षपाती भगवानलङ्घनीयशासनः शम्बरशासनः। प्रायेण दवीयसा भूयेत तन्निवासेन; अन्यथा कालविलम्बनाय कल्पते कथमालक्षिततादृशभावस्य तस्यागमनम्। अथवा लीलावनमिदमुपेत्य पथान्येन सोऽपि त्वदन्वेषी कुत्रचिदत्र चरतीति युक्तिरुपपद्यत एव। अतस्त्वयापि सखीभिः सममध्युषितानि पूर्वमासन्नलतामण्डपान्यन्वेष्टव्यानि। तदनु कमलसरस्तीरवर्तीनि वसन्तकमनीयानि ललितकुसुमपरिमलहारीणि लतामण्डपानि प्रत्येकमटन्त्या त्वया

तत्र तद्गतिरन्वेषणीया' इति मयोक्ता सा, स्वाभिप्रायवशंवदं वचनमभिनन्द्य, सखीजनैः सममन्वेष्टुं चचाल । चलन्ती सा कन्दर्पपरवशा, मत्करावलम्बिनी मन्दमन्दानि पदानि निक्षिपन्ती, निर्मलक्षौमनिचोलप्रावृताङ्गया तदिङ्गितज्ञानकुशलया करकलितकनकवेत्रलतया प्रतीहार्या प्रदर्श्यमानमार्गा, द्राक्षाभवनान्तराणि वीक्ष्य, चन्दनारण्यवीथीं विगाह्य, माधवीमण्डपमध्यानि निध्याय, तमालतरुमूलतल्पानि विलोक्य, कर्पूरपादपमूलवेदिकामासाद्य, बालाशोकमूलमदनदेवताराधननिकेतनानि निशाम्य, अन्यानि तानि तानि तरुलतानिकुञ्जानि निरूप्य, त्वामपश्यन्ती, बभार भूयस्तरां वेदनाम् ॥

तदनु ताड्यमानेव तरलितलताविटपेन मलयपवनेन, भर्त्स्यमानेव परभृतवाचा वसन्तेन, तर्ज्यमानेव चलितकिसलयाङ्गुलिभिरशोकैः, हुंक्रियमाणेव मधुकरझंकारिणा माकन्दवनेन, विह्वलान्तःकरणा कमलसरस्तीरमिदमाससाद । अत्र कमलपरिमलहारिणा मदकलकलहंसमिथुनविरुतमुखरेण लुलितकुमुदवनधूलीधूसरेण तनुतरतरङ्गशिशिरशीकरवर्षिणा शीतलस्पर्शेन जलमारुतेनापि चित्तसंतापमवाप । ततो विततसरोवीचिशिखरविहरमाणतरुणसारसमिथुनसरसरसिततादितश्रवणा, सरभसमासन्नमिमं लतामण्डपमलंचकार ॥

अत्र पुनरिदं चन्द्रकान्तशिलावेदिकातलमधिशयाना, तत्क्षणकुपितमदनशरपातविह्वला, तापतरलाङ्गी सा, समीपोपविष्टां मामेवमवादीत्— 'सखि सौगन्धिके, मन्दभाग्यया मया सर्वत्र समन्विष्टोऽपि न दृष्टो निर्दयो हृदयग्राही जनः। सर्वथा हृदयचोरस्य तस्य पुनर्दर्शनं न घटते। हन्त अन्तर्वर्तिनमरविन्दाक्षमीक्षितुं न गवाक्षयन्ति हृदयमनङ्गशराः। स्वप्नदर्शनमपि दूरतो बभूव; यतो निरन्तराश्रुप्रवाहमज्जनभीतेव नयनयोर्न भवति नेदीयसी निद्रा। चित्रात् ऋते न पश्यामि दर्शनोपायम्। तदानय तूलिकासनाथं चित्रफलकम्। आलिख्य तावदनुभवामि नयनोत्सवकार्मणमाकारम्' इति ॥

अथ सत्वरोपनीतं मया चित्रफलकमादाय, सा पुनरुपर्युपरि निर्यदश्रुप्रवाहविघ्नितदर्शना, क्षणं चिन्तातूलिकया चित्तफलके विलिख्य त्वामनुसंदधे। तदनु सा बाष्पाम्बुपतनोद्भ्रान्तरालेषु करेण तूलिकामादाय विलिखन्ती, 'अयि रागान्धे, किं लिखसि मदतिशायिलावण्यं जनम्' इति कुपितेन कुसुमधन्वना प्रत्यङ्गपातितं नाराचनिकरमिव रोमाञ्चमुद्वहन्ती, 'अव्याजरमणीयस्य रूपस्य करतलनिर्माणकदर्थनयालम्' इति निवार्यमाणेव कम्पेन, 'निवसन्मयि नृपात्मजो न बाह्यकरणीयः' इति कुचकलशोत्कम्पनिभेन हृदयेनेव निवेद्य-

माना, 'त्रिभुवनमोहनं रूपमिदं कथमिव रचयिष्यामि' इति चिन्तयन्तीव मुहुर्मुहुः स्तम्भमाकलयन्ती. अङ्गुलिमुखनिपतितस्वेदजललवपिच्छिलावयवं चित्रगतं त्वामपि स्वकरतलस्पर्शसुखस्विन्नमिव दर्शयन्ती, कथं कथमपि विलिख्य त्वां हृदयतले निवेश्य निमीलितलोचना किमपि किमपि निर्विशन्ती, मुहुश्चक्षुषोर्निक्षिप्याविच्छिन्नधारमश्रु पातयन्ती, मुहुः कपोलतलयोर्निधाय निशि चन्द्रमःप्रतिबिम्बप्रवेशजनितं तापमिव शमयन्ती, मुहुः स्तनशिखरयोः संस्थाप्य तत्क्षणानुस्त्रियमाणसंकल्पसुरतसुखपारवश्यमाबिभ्रती, मुहुर्मुखेन मुखं मेलयन्ती मदनपरवशा बभूव ॥

तदनु सखीभिः 'अस्याः शिशिरोपचारमन्तरेण न किमपि मन्मथवेदनानिर्वापणौषधम्' इति निश्चित्य क्रियमाणतदुचितद्रव्यसंग्रहे, पवनचलिततरुणकदलीपलाशपटलच्छायाश्यामायमानपरिसरे, मणिमयकृत्रिमगिरिमेखलावतीर्णशिशिरनिर्झरजलस्रोतःशीकरनिकरजनितजाड्ये, केतकीधूलीजालकलितसैकतरेखासनाथहिमजलकुल्यासहस्रसंकुले, सरसहरिचन्दनकिसलयरसोपलिप्यमानचन्द्रकान्तमणिकुट्टिमतले, परिसरलम्बमानमृगमदलुलितफुल्लकल्हारदामपरिमलमिलदलिकुलझंकारमुखरे, निरन्तरयन्त्रयुवतिकरतलविधूयमानधव-

लबिसतन्तुचामरपवनसुभगे, प्रतिक्षणमेलारससेकसुरभिगोशीर्षचन्दनपङ्काङ्कितवेदिकासनाथमध्ये, चन्दनाम्बुसमुक्षितक्षौमवितानविततिशोभिनि, वकुलमकरन्दपिष्टमौक्तिकक्षोदसुधालिप्ततले, समुन्नतमृणालतोरणरमणीयद्वारदेशे, त्रिचतुरदिवसोद्गतजम्बूप्रवालरससेकशीतलरत्नभित्तिवलये, विकीर्यमाणबालशैवालाङ्कुरशाड्वलायमानकर्पूरधूलिसिकतिलस्थलीविभागे, क्वचिच्चन्द्रकान्तकलशशतसंभ्रियमाणचन्दनाम्भःसंभारे, क्वचिदकठोरलवलीकिसलयरससिच्यमानसरसतामरसपलाशतल्पे, क्वचित्कर्पूरकिसलयरसार्द्रीक्रियमाणशैवालवल्लीविरचिततालवृन्ते, क्वचिल्लम्ब्यमानमुक्तामयमुकुरभासुरे, क्वचिन्निर्वर्तितधवलकुमुददलशय्याविकीर्णमृदुलघनसारपांसुप्रकरे, क्वचन हल्लकमकरन्दनिक्षिप्तकुमुदधूलीपङ्कचर्चितचन्द्रकान्तशिलाशयनीये, क्वचित्सुरभिपरिमलोशीरजालकविवरसंचारिमारुतपथवितन्यमानकुसुमसंस्तरे, सुधामय इव, नीहारमय इव, चन्द्रिकामय इव, चन्द्रकान्तमय इव, चन्दनमय इव, प्रावृण्मय इव दृश्यमाने लतामण्डपेऽस्मिन्, तापसमुचिते शयनेऽत्र पपात ॥

तदनु सा शयनपरिवर्तनलुलितैः कपोलफलकपातिभिरलकाग्रैरश्रुप्रवाहाननवरतपातिनः सशैवालानिव दर्शयन्ती, हारतरलपद्मरागरत्नद्युतिलोहितत्विषि दलितहृदयरुधिरप्लावि-

तानीव कामास्त्राणि स्तनान्तरलग्नानि शयनकुसुमानि धारयन्ती, मदनशरकुसुमकेसरविसररूषितामिव रोमाञ्चिनीं गात्रलतां दधाना, कन्दर्पायुधतक्ष्यमाणेव प्रतिक्षणं क्षीयमाणा, तापासहतया प्रतिबिम्बव्याजेन प्रविष्टेव चन्द्रकान्तमणिवेदिकास्थलम्, दुःसहतापज्वरोष्मव्यतिकरेण शुष्यन्ति बिसभूषणानि दधती, कुपितमकरध्वजमुक्तघोरशरशतशल्यकीलितहृदया, तापज्वरमसहमाना 'सखि काममञ्जरि, संचारय शिशिरमुशीरतालवृन्तपवनम् । इन्दुमति, हिमजललवस्यन्दिभिरिन्दीवरपलाशैः प्रावृणु पयोधरतटीम् । हेमवति, विकिरोरसि हिमजललुलितानि हिमवालुकाधूलिजालकानि । इन्दुमुखि, चन्दनरससिक्ते शायय मां चन्द्रकान्तशिलाशयनीये । बन्धुमति, रुन्धि कवाटेन मन्दपवनस्यन्दि वातायनम् । मञ्जुभाषिणि, प्रोत्सारय पञ्चमोत्किरमङ्कणसहकारकोकिलकुलम् । कलावति, कलय मुखे कल्हारमकरन्दवारिव्याकिरणम्' इत्येतान्यन्यानि च प्रलपन्ती, प्रतिक्षणं मूर्च्छन्ती, सत्वरसखीजनजनितप्रतिक्रियोपजातचेतना च पुनर्दूयमाना, मुहुरनाश्यानचन्दनपङ्कवेदिकासु निपात्यमाना, मुहुर्हिमजलसिक्तासु कर्पूरधूलीशय्यासु निक्षिप्यमाणा, मुहुरतिसुरभितकोलधूलिलुलितधवलकुमुददलशयनेषु निधीयमाना, मुहुर्मलयजरससेकशीतलेषु कोमलेषु कदलीगर्भदलेषु निवेश्यमाना, मुहु. सौगन्धिक-

मकरन्दसेकतिम्यत्स्थलासु इन्दुकान्तशिलासु नीयमाना, मुहुः करतलमृदितहरिचन्दनकिसलयरससिच्यमानेषु पद्मिनीपलाशतल्पेषु प्रतिष्ठाप्यमाना, संतापस्य परां कोटिमुपगतवती ॥

तदानीमपरेव सखी कुतोऽप्यागम्य, तामरतिरस्पृशत् । तस्या हृदयान्तःपतन्मदनशरताडिता इव कण्ठे निपेतुरसवः । एवं दुर्निवारेण मकरकेतुना दुष्प्रतिक्रियां दशां प्रापितां पार्थिवकुमारीमालोक्य, निरङ्कुशातङ्कवेपितहृदयः सखीजनस्तदा तस्थौ ॥

तस्मिन्नेव समये निर्गत्य नगरात्, कलशभवशापप्रतिबन्धं बन्ध्ययन्पुनरुत्थितो विन्ध्यगिरिरिति विलोक्यमानो जनैः, कल्पावसानघनघटारटनकटुना कण्ठगर्जितेन प्रतिक्षणमनभ्राशनिरसितशङ्कामापादयन, अभ्रंलिहकान्तिसंतमसेन रोदस्योरन्तरमाविलयन्, क्षयसमयकीनाशपाशचण्डेन शुण्डादण्डेन स्थवीयसोऽपि सरणिपादपान्मृणाललावं लुनन्, प्रमथितपौरजनविततपुरीतल्लतापरीतदशनकुलिशः, निरन्तरक्षरितकपोलमदझरीप्रवाहेण प्लावयन्पृथिवीम्, पश्चात् झटिति समाढौकमानेन करकलिततोत्त्रयष्टिना 'मानुषघाती मत्तो वारणपतिरयमनिवारितगतिराजिहीते । सरभसमपसर्पतापसर्पत' इति मुहुर्मुहुरुच्चैरुद्घोषयता हस्तिपकनिवहेन अनुबध्यमानः

कोऽपि दुष्टवारणपतिराजगाम । तद्दर्शनत्रासेन सर्वतो धावमानानन्यान जनानालोक्य, वयमपि स्त्रीस्वभावसुलभेन भूयसा भयेन वेपितहृदया., तदवस्थामपि राजकन्यकामारोप्य शिबिकामानयन्त्य:, तरुषण्डान्तरगता: सरभसमुपेत्य कन्यान्त:पुरम् , तत्र चन्दनजलसमुक्षिते चन्द्रकान्तमणिवेदिकातले तां शाययित्वा समाचराम शिशिरोपचारक्रियाम ॥

ततश्चन्दनजलसेकशिशिरोशीरतालवृन्तपवनादिना शनै: शनै: समुपजातसंज्ञा सा संभ्रमप्रसारितेन चक्षुषा तत इतो विलोक्य चित्रफलकमपश्यन्ती, भूयसीमधत्त चित्तव्यथाम् । 'इदमपि घटत एव मे मन्दभाग्याया: ; यददर्शनं चित्रफलकस्यापि । हन्त दग्धं पुनर्दहति विपरीता दैवगति:' इति व्याहरन्ती, बाष्पजललुलितेन किञ्चिदुदञ्चितभ्रूलतेन तनुतरङ्गसङ्गितरुणशफरसाम्यसंपादिना चक्षुषा समुद्वीक्ष्य मे समीपवर्तिन्या मुखम् , अवादीत्— 'सखि, मम सर्वाङ्गतापनिर्वापणनिदानं चक्षुरानन्दसंदायि चित्रफलकं क्वास्ते' इति। अहं तु तदात्वसमुत्पन्नचित्रफलकस्मृतिरेवमवादिषम— 'कल्याणि, केलीवने कमलसरस्तीरलतामण्डपे तस्मिन् अवज्ञातशिशिरोपचारक्रियाकलापया बलवदनङ्गपीडया विसंज्ञिता त्वं दुष्टवारणदर्शनभयचकिताभिर्विस्मृतचित्रफलकाभिरस्माभिरा-

सीयमिदं कन्यान्तःपुरमानीता । किमत्र विषादेन । एकया कालकलया सत्वरमुपगम्य केलीवनम्, आनेष्यामि चित्रफलकम्' इत्याख्याय तदङ्गीकृतगमना द्रुततरगतिरयासिषमिदं लीलावनं । अत्र तु मूर्तमिव भागधेयं प्रजानाम्, सकलभुवनसंमोहनसौन्दर्यसुधानिधिम्, एकादशावतारमिव इन्दिरारमणस्य, अनाकलितपुष्पचापमकरपताकमिव मन्मथमालोक्य त्वाम्, अवनिपतिदुहितुरक्षिपथपतितमाशाफलमाकलयन्ती, अचिन्तितविभातां च विरहविभावरीं वितर्कयन्ती, विस्मयोत्तानमतिरतिष्ठम । अतः परं देवः प्रमाणम्' इत्युक्त्वा विरराम ॥

अनन्तरम् 'अघटनीयाप्येतदागतिर्दैवादुपनता । तदियमखननक्लेशसुलभा निधिप्राप्तिः' इति चिन्तयन् नृपतिः, प्रेमरसार्द्रेण हर्षविस्तारिणा विलोचनेन तदुत्तराख्यानप्रस्तावमिव दिशन्विदूषकं विलोकयामास । तदनु विदूषकस्तामवादीत्—'अयि भद्रे, त्वत्सखीमनोरथफले मन्मथातिशायिलावण्ये साक्षान्नारायण इव सकलभुवनवन्द्ये पुरस्तिष्ठत्यपि पार्थिवसार्वभौमेऽस्मिन्, किमनेन चित्रफलकेन । प्रत्यक्षदृष्टदैवतस्य नास्ति तत्प्रतिमान्वेषणक्लेशः' इति वदति विदूषके, राजा तु 'धनमिव परहस्तपतितमिदमपि दातव्यमेव' इति वदंस्तदादाय चित्रफलकम्, तस्मिन्निमामार्यां विलिलेख—

'जानासि वा न वा त्वं बहुधा मम हृदयमदयसंरम्भः ।
ताडयति चन्द्रवदने त्वदपाङ्गनिदेशकिंकरो मदनः ॥'

इति विलिख्य तस्यै समर्प्य चित्रफलकम् 'अयि भद्रे, अविलम्बितमेव कन्यागुरुसमीपमहं जनं प्रेषयामि परिणयनप्रसङ्गाय । त्वमपि सरभसमेव गत्वा, त्वत्सखीमपि विदितवृत्तान्तां विधेहि' इत्युक्त्वा तां विसृज्य, विदूषकेण सह निजनगरं प्राविशत् ॥

इति श्रीगद्यकविसार्वभौमस्य वत्सकुलतिलकस्य
महाकवेरभिनवभट्टबाणस्य कृतौ
**श्रीवेमभूपालचरिते**
द्वितीय उच्छ्वासः ॥



॥ श्रीः ॥

# तृतीय उच्छ्वासः ॥

---

अथ धरापतिः परिणयनप्रसङ्गाय कन्यकाजनकं प्रति समुचितवस्तुपुरःसरम् अभिजातजनप्रेषणेन संपादितमनोरथफलः, मौहूर्तिकानुमते निखिलभुवनाभ्युदयनिदाने प्रत्यासन्ने परिणयनदिने, धृतवर्णकम्बलानां स्वर्णपरिष्कारिणाम् अन्तरितमन्दरगिरिगरिम्णां गन्धकरिणां बृन्दैः मधुरहर्षहेषारवपूरितरोदसां धौरितकादिगतिचातुर्यधुर्याणां कनकखलीनपल्याणपरिष्कृतानामनेकलक्षणानां वाजिनां व्रातेन च परिवृतः, चामीकरमयसर्वोपकरणां नक्षत्रमालाहारिणीं करिणीमधिरूढः, सरभसमहमहमिकाप्रणामनिपतदवनिपतिमण्डलमकुटतटताडनकुण्डलितवेत्रयष्टिभिर्निष्ठुरहुंकारभयपलायितपौरजनैः प्रतीहारिभिरञ्चितपुरोभागः, तालानुगुणोच्चारणचणवारणपुरःसरचारणगणपठ्यमानशौर्यचाटुगाथासहस्रः, संततममुक्तपार्श्वस्थितिभिरात्मनिर्विशेषवेषधारिभिरुत्तुङ्गमातङ्गाधिरूढैः समानवयोभिरनेकै राजन्यपुत्रैरनुक्षणाक्रियमाणजयजीवशब्दः, विरचितविवाहवेषः पुरान्निर्जगाम ॥

तस्मिन्नेव समये समासाद्य परिणयनमङ्गलाहूताश्च राजन्यसार्थाः पार्थिवं पर्यवारयन ॥

'देव, सुरभियशःकर्पूरवासितजगदण्ड जगनोब्बगण्ड, पाण्ड्योऽयम्, भ्रूलतादिष्टभूपाल जगदेकपाल, नेपालोऽयम्, बहुविधरणमुखशकलितमदवदिभपतिफाल गूर्जिधट्टिविदाल गूर्जरोऽयम, निखिलकलाकेलिकुशल केलादिराय, केरलोऽयम्, प्रचण्डपराक्रम पाण्ड्यराजगजमृगेन्द्र, गान्धारोऽयम्, विघट्टिततुलुष्कतुक्खारघट्ट अपरगोपयदिशापट्ट, नृपतिराराट्रोऽयम, निखिलभुवनपरायण वीरनारायण, मालवोऽयम्, परपुरदहनत्रिणेत्र पल्लवत्रिणेत्र, पारसीकोऽयम्, पूरितार्थिजनकाम भुजबलभीम, कामरूपोऽयम्, प्रथुलभुजस्तम्भदम्भोलिजृम्भितारातिभूमिभृत्कम्प जम्बूद्वीपेश्वर, सिंहलोऽयम्, निरतिशयभक्तिप्रसादितश्रीशैलमल्लिकार्जुन संग्रामार्जुन, शकोऽयम, कलितकलिबलभङ्ग त्रिलिङ्गाधिनाथ, कलिङ्गोऽयम्, वासवनिभ वैरिराजवंशशङ्काकर वङ्गोऽयम्' इति मन्त्रिभिः प्रदर्श्यमानेन पदे पदे विरचितप्रणामेन पार्थिवसार्थेन परिष्क्रियमाणपरिसरः प्रायात् ॥

ततः परिस्फुरिताष्टापदेष्टकचिततटैर्घटितकनकमयघटीयन्त्रैर्मकरमुखमणिप्रणालबन्धुरैश्चन्द्रकान्तनिर्मितनिपानबन्धैरन्धु-

भिर्निरन्तराभ्यर्णेन, मणिकलशमुखोज्झितबहुलचन्दनजलसेकशमितरजसा, निरन्तरस्थापितकनकमयकदलीपूगपुन्नागपनसनालिकेरप्रायमहीरुहव्रातपरिवृतेन, कर्पूरपांसुसिकतिलेन, रत्नराशिशर्करावता, पट्टांशुकविरचितविततवितानमण्डलेन वर्त्मना गच्छन, कुङ्कुमपङ्कलिप्तवेदिकासु यन्त्रयुवतिकरतलतरलितोशीरतालवृन्तपवनशिशिरासु मृदितसुकुमारगन्धसारकिसलयरसोपलिप्ताजिरासु कुसुम्भाम्भःप्लवरज्यमानकुट्टिमासु जम्भरिपुशिलास्तम्भसमुत्तम्भितासु उपकार्यास्वन्तरान्तरा निवसन, श्वशुरपुरसमीपमाससाद ॥

श्वशुरोऽपि जामातरमुपतोरणमागतं समाकर्ण्य, सबन्धुजनश्चरणाभ्यामेव प्रत्युज्जगाम । औपवाह्यकरेणोरवरुह्य प्रणमन्तं जामातरमतिदूरावनताभ्यां भुजाभ्यामुत्थाप्य, हर्षनिर्भरोदञ्चितरोमाञ्चैरङ्गैर्गाढमालिलिङ्ग । पुनरारूढकरेणुं तमलंकृतेन राजमार्गेण स्वभवनमानिनाय ॥

ततः शातकुम्भस्तम्भशतसमुत्तम्भितानि प्रज्वलितमणिप्रदीपसहस्रतया जामातृदर्शनकुतूहलोत्तानितलोचनानीव दृश्यमानानि जन्मस्थानानीव जगतां त्रयाणाम् अनक्षिगोचरान्तानि अनेकानि कक्ष्यान्तराण्यतिक्रम्य, दर्शनकौतुकागतानां च कन्यकासखीनां कुवलयवनैरिव मधुकरनीलैरक्षिविक्षेपैः

शारिताभोगस्य उपरि विनिहितकुसुमदामचारुभिर्भद्रकुम्भैरिव पयोधरमण्डलैः स्थपुटितसंनिवेशस्य, अतिविमलतया प्रतिबिम्बग्राहिभिः स्फटिकादर्शैरिव कपोलफलकैः कन्दलितरामणीयकस्य, प्रकटितपद्मरागैर्भास्वद्भिरिवाभरणैराकारिताकालबालातपस्य, वकुलकुसुमामोदनिर्हारिभिर्वसन्तवासरैरिव निश्वसितैः सुरभीकृतान्तरालस्य प्रवालमण्टपस्य मध्यमलंकुर्वाणे मणिमये महति भद्रासने निवेशयामास जामातरम् । तत्र स गान्धर्वविद्यापारदृश्वभिर्विश्वावसुनिभैर्गायकैर्गीयमानानि निजभुजविजयपद्यानि शृण्वन, क्षणमासांचक्रे ॥

ततः समग्रग्रहानुग्रहं वैवाहिकं लग्नं प्रत्यासन्नमिति मुहुर्मुहुरवदन्मौहूर्तिकाः । पुरोधसा च ' महाराज, प्रत्यासन्नं परिणयलग्नम् ' इत्यभिहितः परिसरवर्तिना मालवराजकुमारेण दत्तमवलम्ब्य हस्तम् उत्थाय, दर्शनकुतूहलविस्तारितैर्निर्निमेषैर्नितम्बिनीनां लोचनाञ्जलिभिर्निपीयमानलावण्यरसः, क्वचिन्मरकतशिलास्तम्भै रचितरम्भावनाविभ्रमम्, क्वचिदपूर्वरूपातिशयमोहिताभिरिव चामीकरस्तम्भनिषण्णाभिर्युवतीभिः सालभञ्जिकाभिः साप्सरायमाणसंनिवेशम्, क्वचिदुज्ज्वलदुकूलवितानद्युतिभिर्जन्यमानक्षीरोदसहस्रशोभम्, क्वचिद्गरुडमणिशिलाराशिभिराहूयमानबहुप्रदोषतिमिरम्, क्वचिल्लम्ब-

मानललितसुमनोदामसौरभैः संभ्रियमाणवासन्तिकवासरविलासम्, कचिदिन्द्रनीलप्रभावितानैर्विस्तार्यमाणयमुनास्रोतःसंतानम्, कचिद्राशीकृतैः कर्पूरपांसुभिर्विडम्ब्यमानमन्दाकिनीबालपुलिनमण्डलाभिख्यम्, कचिन्मुक्तामणिमरीचिजालकैराविष्क्रियमाणराकानिशाप्रकाशम्, कचित्कनकमयमहीरुहप्रावृतैः कल्प्यमानकल्पतरुकाननद्योतं कौतुकागारमविक्षत् ॥

अनन्तरमुज्ज्वलन्तीभिरोषधीभिरुद्भासितामुदयगिरितटीमिव रोहिणिशशाङ्कौ उद्दीपितामुद्गतमरीचिजालकाभिर्मणिदीपिकाभिर्वधूवरौ विवाहवेदीमलचक्रतुः। वसन्तमयाविव बहुलकुसुमपरिमलोद्गारिणौ, चन्द्रिकामयाविव सकलहृदयाह्लादनौ, संध्यामयाविव सर्वभुवनवन्दनीयौ, रतिमदनाविव मानुषीं सृष्टिमुपगतौ, चक्रवाकाविव अन्योन्यानुरागबद्धहृदयौ, शृङ्गारमयमिव सर्गमापादयन्तौ, रागराज्यमिव प्रवर्तयन्तौ, कान्तिमयमिव ककुभां चक्रवालमारचयन्तौ, लक्ष्मीनारायणाविव लावण्यामृतपूरवर्षिणौ वधूवरौ पश्यतां चक्षुरुत्सवं चक्रतुः। अनन्तरमन्तरधृतायामपनीतायां तिरस्करिण्याम्, अङ्कुरितरागैरपाङ्गवीक्षितैरन्योन्यं हृदयमाकर्षन्तौ, मनोरथतरुकुसुमोपमेयेन परस्परस्योपरि विकीर्णेन मौक्तिकाञ्जलिना समाचरतामिव मदनागमदीक्षाभिषेकम्।

तेजोनिधिरिव दीर्घिकापद्ममुषसा समर्पितम्, गीष्पतिप्रतिमेन पुरोधसा गृहीतमरुणाङ्गुलिदलकोमलं करेण जग्राह वरो वधूकरम् ॥

अथ यथाक्रममेवमनुष्ठिते विवाहकर्मणि, जामातृसखान् राजन्यकुमारान् अन्यांश्च मणिमयभूषणवसनादिभिः संभाव्य, जामातरमाखण्डलप्रभावमात्मीयसंपदनुरूपेण हरणेन संयोज्य प्रस्थापयन्, दुहितृविरहविक्लबः श्वशुरः सह बन्धुभिरतिदूरमन्वग्ययौ ॥

अथ निवर्तितश्वशुरः पृथिवीपतिः, परिसरलम्बमानसौगन्धिकदामपरिमलमेदुरेण हिमसेकशीतलभुवा निर्णिक्तदुकूलवितानसंततिपिहितमिहिरधाम्ना मार्गेण वधूसहायो जगाम । आससाद च परिष्कृतराजमार्गामात्मीयां राजधानीम् ॥

अनन्तरमतिशयितलक्ष्मीरूपसंपदा वध्वा सह समागतम्, अधिगतदेहमिव कन्दर्पमवनिपालमालोकयितुमुत्सुकानां पुरयुवतीनां बभूवुरेवं चेष्टितानि— काचित्सत्वरावलोकनसंभ्रमेण कण्ठे निधातुमजानती हारं तदाकर्षणमन्त्रजपाक्षवलयमिव करतल एव धृत्वा कलयामास राजमार्गम् । काचिन्मरकतनूपुरेण चरणमेकमलंकृत्य, सत्वरतदालोकनसंभ्रमादसंभावितान्यचरणा समादाय करेणापरं गच्छन्ती, शुण्डाग्र-

गृहीतशैवालकिसलयकवला करिणीवालक्ष्यत । तद्दर्शनकौतुकिनी काचित्कालाञ्जनकल्पनायां कालविलम्बकारणं दृशोर्दैर्घ्यं निनिन्द । इदं खलु तदालोकनसरणिमाशु मामानेष्यतीति तदर्हणां कुर्वतीव, संभ्रमपरवशा चरणयुगले काप्यङ्गदं बबन्ध । कस्याश्चित्तदालोकनसंभ्रमगतिवशपतदुत्तरीयांशुकमुन्नतिशालि कुचयुगम्, अपनीयमानमुखपटमदकरिकुम्भश्रियमुवाह । काचित्तदन्तिकमुपेयुषी पवनतरलसंव्यानपताकापटा चारुनयनशफरानुषङ्गिणी केतनयष्टिरिवानङ्गस्य ददृशे । धरणिपतिदर्शनकौतुकेन सरभसचलिता काचिच्चरणपतितां गतिनिरोधिनीं मेखलां चकर्ष करिणीव शृङ्खलाम् । सरभसगतिवशशिथिलितबन्धा नवकुसुमनिकरशारा कबरी कस्याश्चिन्मदनैन्द्रजालिकमयूरपिञ्छिकायमाना बभासे । काचित्तदन्तिकगता वनमृगीव रागवागुरापतिता स्मरमृगयुबाणैराहन्यमाना मुमोह । काचिदपरस्याः प्रतिबिम्बितपार्थिवकुमारं कपोलतलमालोक्य, तस्यै भृशतरमभ्यसूयां बभार । काचिन्मुग्धवधूर्हारतरलरत्नप्रतिबिम्बितमवनिपतिकुमारमविशङ्कमालोकयितुमभिलषन्ती, संव्यानकांशुकेन तं समाच्छादितमपश्यन्ती, भृशमदूयत । काचिदुदीर्णकन्दर्पघर्मतप्ता दृष्ट्यञ्जलिना चिरमतृप्यन्ती तदवयवलावण्यामृतमधासीत् ॥

तासां च कूलङ्कषमदनरसानां व्यज्यमानरागोदया बभूवुरे-

वमालापाः— 'पश्य सखि, पार्श्वस्थितेन मालवराजकुमारेण सह किमपि संलपतोऽस्य किंचिदुदञ्चितस्मितचन्द्रिकमाननं द्विचन्द्रमिव दर्शयति भुवनमिदम् । सदा संनिहितोदयरागलेशं यदि समुज्झितकलङ्कं शशाङ्कबिम्बम्, तदेदमरुणाधरशोभिनोऽस्य मधुरकान्तिनो वदनस्य तुलां लभते । शङ्के, चिराय सागरसलिलेष्वघमर्पणतपांसि कृत्स्नफलानि शङ्खकुलस्य, यस्मादमुष्य कण्ठे हारतां गतास्तदात्मसंभवा मुक्ताः, स्पर्शसुखानुभूत्येव व्यज्यमानतनुकिरणपुञ्जरोमाञ्चा विभान्ति । इयमवनिपालनन्दना हिमगिरिशिलाविशालमतिमनोहरमस्य भुजान्तरमासादयितुं कमलेव नारायणस्य कति कति पुण्यानि तपांसि कृतवती । संसर्पिणा कर्णाभरणपद्मरागरोचिषा रञ्जितकपोलमाननमस्य विडम्बयति बालारुणकिरणनिकुरुम्बचुम्बितामम्बुरुहलक्ष्मीम् । अयमालोलकर्णाभरणखचितमुक्ताफलसान्द्रकिरणचन्द्रिकाप्लावेन आत्मीयं मांसलमंसस्थलमारोपिताया मेदिन्या व्यपनयतीव पूर्वनरपतिसहस्रभुजाशिखरारोहणावरोहणायासमूर्च्छाम् । अहो, सदृशवस्तुसंयोजनचातुरी विधातुः, यतो रतिरिव मकरकेतुम्, अखिलभुवनसंमोहनलावण्यसारमात्मानुरूपं रमणमियमवनिपालतनया समासादितवती ।' इत्थमाविष्कृतमदनविकृतीनां पुरयुवतीनां सरागाणि वचांसि पल्लवानीव कर्णयोः कुर्वन्क्षितिपतिः सरसी-

मिव तदपाङ्गविक्षेपैः कुवलयितां राजवीथीमतिलङ्घ्य स्वभवनमयासीत् ॥

अथ मूर्तया राजलक्ष्म्येव नृपतिरनवद्यसर्वाङ्ग्या तया सह समुद्भासितकर्पूरधूलिसुरभिधवलैः कीर्तिगङ्गाप्रवाहैरनेककुनृपतिचरितकलङ्किनीं क्षमां क्षालयन्, करकलितखड्गरुचिकदम्बककादम्बिन्या प्रत्यर्थिराजहंसमण्डलानि दूरमुत्सारयन्, दिशि दिशि रिपुयुवतिबाष्पवर्षदुर्दिनेऽपि प्रज्वलन्तं प्रतापानलमुद्वहन्, शशास सर्वमुर्वीतलम्। स खलु तया सह दयितया, क्रीडागिरिषु लीलावनेषु केलिसरस्तीरलतामण्टपेष्वन्येष्वपि रमणीयेषु स्थानेषु रममाणः, सफलीचकार यौवनम्। तस्माच्च भुवनमहितकीर्तेः प्रोल्लभूपालात्, कलितवितरणकेलयः कल्पद्रुमा इव कलशार्णवात्, प्रकटितपराक्रमप्रकर्षाः पार्था इव पाण्डुनृपात्, निर्धूतनिखिलदुरितग्रन्थयो यज्ञा इव निगमादजायन्त चन्दनमिलनसुखितबहुभुजङ्गचरितानि सकालागरुतिलकगणिकारमणीयदर्शनानि चलितविविधपत्रस्यन्दनबृन्दनिरन्तराणि रथ्यान्तराणि, विधूतचमरवालशतबहुलानि अनवरतवलमानरामाङ्कितलन्यासमन्द्ररणन्मणिसोपानपर्वाणि राजास्थानमण्डपानि, चपलहरिकुलबन्धुराणि मन्दुरान्तरालानि, कञ्चुकिकुलाध्यासितानि वेत्रलतासहस्रदुष्प्रवेशानि पार्थिवभवनद्वाराणि, सवनप्रियद्विजवदनोदीर्णश्रुतिसु-

स्वस्वनपूर्णानि पुरोहितसदनानि, कलिताक्षविसराणि द्यूतस्थानानि, खड्गशरासनसंबाधानि आयुधागाराणि, निर्भरनिषादस्वराणि गायकभवनानि, पुंनागनमेरुवकुलचम्पकमालासुरभीणि मालाकारगेहानि, तुङ्गवरणसंगतानि वप्रस्थानानि च जीर्णारण्यीभूतेष्वपि रिपुनगरेषु यथापुरमुपदर्शयन्तः, जलनिधिमथनसमया इव श्रीसमुत्थानहेतवः माचनरेन्द्र इति, वेमभूप इति, दोड्डनरपतिरिति, अन्नभूप इति, मल्लमहीपाल इति, भुवनमहितनामानः पुण्यचरित्रारञ्जितक्षितयो भञ्जितारातिपुञ्जाः पञ्च कुमाराः ॥

तेषामनुपमकीर्तिरादिमो महाभिमानितया वासमण्डपिकां वसुधाम्, धनदपुरप्रभृतीनि शाखानगराणि, बाह्याङ्कणानि द्वीपान्तराणि, कुलगिरिकूटानि वल्मीकानि, पल्वलानि पयोधींश्च मन्यमानः, शिलाकठिनकायबन्धः, दुर्वहसर्वोर्वीभरहरणार्थं वेधसा कुलपर्वतैरिव निर्मितावयवः, कुण्ठितकुहनाकूर्मबलेन धिक्कृतमहावराहदंष्ट्रास्थेम्ना निराकृतसुमेरुसारेण प्रत्याख्यातफणिपतिफणाटवीपाटवेन अवज्ञातादिक्कुम्भिकुम्भसामर्थ्येन न्यक्कृतकुलशैलशक्तिना भुजेन भूषणमिव भुवनभारमुद्वहन्, वन्द्यो बभूव माचभूपालः ॥

यस्य च पुनरनुजो दुःशासनहृदयविदारणो युधिष्ठिरस्य

भीमसेन इव, बलिराज्यभञ्जनः पुरन्दरस्योपेन्द्र इव, शक्तिसारसाधितसकलरिपुमण्डलो हेरम्बस्य कुमार इव, निरुपमभागधेयः प्रजानामखिलभुवनसंरक्षणालंकर्मीणो धर्म इव वपुष्मान् , धनुष्मतामग्रगण्यः, षाड्गुण्यप्रयोगकुशलः, श्रुतपारदृश्वा, विश्वजनीनचेष्टः, सत्यपथप्रचारजाङ्घिकः, परशुरधर्मद्रुमस्य, सलिलनिधिरिव भाजनं सर्वरत्नानाम् , अष्टादशद्वीपफलस्य भोक्ता, पश्यतोहरः प्रत्यर्थिसंपदाम् , अरणिरमर्षाग्नेः, अनध्यायपर्व स्ववृक्षयशःश्रुतीनाम् , द्वैतमिव धुन्धुमारस्य, प्रतिच्छन्द इव हरिश्चन्द्रस्य, पर्याय इव भगीरथस्य, वीप्सेव मान्धातुः, विकल्प इव इक्ष्वाकोः, विवर्त इव कार्तवीर्यस्य, आविष्कार इव रघोः, प्रतिनिधिरिव भरतस्य, प्रतिबिम्बमिव अम्बरीषस्य, अनुवाद इव अंशुमतः, विभाषेव नहुषस्य, गुणनिकेव युवनाश्वस्य, अपृथक्त्वमिव पृथोः, अन्वादेश इव शतधन्वनः, विभाग इव नाभागस्य, दर्शनान्तरमिव दिलीपस्य, द्विर्भाव इव दुष्यन्तस्य, भूमिकेव पुरूरवसः, पुनर्जन्मपरिग्रह इव नृगस्य, विनिमय इव निमेः, विपरिणाम इव ययातेः, आम्रेडितमिव संवरणस्य, पुनरुक्तिरिव पुरुकुत्सस्य, दृष्टान्त इव दशरथस्य, समुत्तेजनमिव सगरस्य, भेद इव गाधेः, निदर्शनमिव जामदग्न्यस्य, व्यत्यास इव मारुतस्य, रूपान्तरमिव

नलस्य, द्विरुक्तिरिव युधिष्ठिरस्य, व्यतीहार इव यदोर्विभाव्यमानः, दिग्गजकर्णतालपवनसंधुक्ष्यमाणेनेव प्रतिदिशं ज्वलता प्रतापानलेन नीराजितनिखिलभुवनान्तरालः, गरुड इव विश्वंभरोद्वहनहेलारसिकः प्रकटितगुरुपक्षपातश्च, कमलाकर इव सूर्यालोकोत्पन्नहर्षो विहितकोशसंग्रहश्च, सप्ततन्तुरिव परिचितबहुशस्त्रक्रियो महावीरान्वितश्च, शंभुरिवाहेयभोगभूषितः प्रकटितप्रकृत्यादरश्च, नलिनबन्धुरिव नालीकानुरागदर्शनः, बृहस्पतिरिव वृषकार्यप्रवृत्तः, उत्तानपाद इव परिगृहीतसुनीतिः, करिपतिरिव दानशूरः, वरुण इव सर्वभुवनगोप्ता, विश्वकर्मेव प्रभासहितः, हुतवह इव समधिगतकाष्ठाधिकविभूतिः, जिष्णुरपि प्रचेताः, प्रियव्रतोऽपि मान्धाता, सुप्रतीकोऽप्यमदः, प्रद्युम्नोऽपि अभीतिः, नाभिरपि भद्राश्वः, विश्वविख्यातभूमा वेमभूपालः सर्वमुर्वीमण्डलमजैषीत् ॥

य. खलु रूपनारायणः प्रकटितभूदारभावो यवनमहाप्रलयार्णवमध्यपतितामुद्धृत्य वसुंधराम्, दर्शितात्मीयसुखकराश्लेपश्चिरं बुभुजे । यश्च भार्गव इव बहुशः क्षपितविमतक्षत्रियकुलो भुजार्जितां भूयसीं विप्रसादकृत विश्वंभराम् । येन खलु विरचितेन श्रीशैलशिखरतः पातालगङ्गावतरणसोपानपथेन यज्ञात् ऋते, विहाय योगम्, अन्तरेण तपांसि, जनानां शिवपुरप्रयाणघण्टापथेन संजज्ञे ॥

तस्य च माचभूपतेरजनिषताग्नाय इव असह्यतेजस,
सततमसिलताकुवलयवने मधुकरीमिव वीरलक्ष्मीमासञ्जय-
न्तः, पुण्यराशय इव पुंरूपेण परिणता भूमेः, विश्वविश्वभ-
रापालकोटीरकोटिनिघर्षणनिर्मलीकृतचरणनखमणयः, त्रिभुव-
नजङ्घालकीर्तयः, प्रतापपावकविप्लुष्टराजवंशाः, चटुलतुरगखु-
रमुखमुद्रितसमुद्रवेलावनयः, रेड्डिप्रोतभूप इति, पेद्दकोम-
टीन्द्र इति नागरेन्द्र इति, त्रिदशसदृशास्त्रयो नन्दनाः ॥

ततः क्रमेण गुणज्येष्ठो विशेषतः पालयिता बभूव चतुरर्ण-
वमेखलाया धरालक्ष्म्याः, अतन्द्रितप्रकृतिः, सूत्रधारः परि-
पन्थिकबन्धताण्डवानाम्, अरणिः प्रतापदहनस्य, प्रथमावतार-
सरणिः पराक्रमस्य, जीवातुर्दयायाः, संचरणसहायो धर्मस्य,
लुण्टाकः कण्टकायुषाम्, आयुष्यवैद्यो विद्यानाम्, शर्वरीचरम-
यामः सरस्वतीयूथिकोन्मेषस्य, कालमेघः कविरसनाकन्दलोल्ला-
सस्य, मातृकायमाणो वदान्यसर्गस्य, सीमान्तदृश्वा श्रुतस्य,
मङ्गलरागः शृङ्गारनटस्य, कनखलः कीर्तिगङ्गायाः, यवन-
कुलकालकूटकबलनमहाकालः, मगधकुडुम्बोच्चाटनमन्त्रवादी,
काम्बोजाम्भोजहेमन्तः, पारगः प्रतिज्ञायाः, मर्मज्ञो धर्मशास्त्रा-
णाम्, समवायावतार इव कल्पद्रुमनिधिकामधेनुजलधरचि-
न्तामणीनाम्, स्मरकेतनशफरीचारुनयनाभिः भ्रमरीपरिचु-

म्ब्यमानमाल्यकह्लाराः कबरीरुद्वहन्तीभिः अमरीनिभाभिर-रिवधूभिरविरतविधूयमानचमरवालपवननर्तितकर्णपल्लवः, पृथुभरतभगीरथकार्तवीर्यादिकीर्तिचन्द्रिकाप्रत्यूषः, सततमहमहमिकाप्रणामनिपतदवनिपालकोटिचामीकराकिरीटपरस्परघर्षणपातितपांसुपटलपरिणतपादपङ्कजपरागोदयः, निर्जितानेकद्वीपान्तरराजलोकमणिमयकिरीटस्थलीगृहमेधिपादप्रतिमः, भास्करमय इव पद्मोल्लासने, शशिमय इव सकलजनाह्लादने, लोहिताङ्गमय इव भूनन्दनत्वे, सौम्यमय इव सकलशास्त्रावबोधे, धिषणमय इव देवकार्यप्रवर्तने, भार्गवमय इव वृषपर्वप्रसक्तौ, शनैश्चरमय इव छायाप्रभवत्वे, राहुमय इव सकलराजमण्डलग्रहणे, केतुमय इव परविनाशने, पेद्दकोमटीन्द्र इति रजनिकरकरावदातचरितो राजराजप्रभावो राजा ॥

अव्याजपूर्वममानसगोचरमकालनियममतिशयितादरम् अधिकानि धनानि वितरतो यस्य त्रिजगति समं न पश्यामि मान्यमन्यं वदान्यम् । तथाहि—समयः, चापलगुणप्रकाशनम्, आक्रन्दनम्, अस्थानापवर्जनम्, भ्रमणसमुज्जृम्भणतत्क्षणलयनानि च विद्यन्ते वितरणकाले मेघस्य । चिन्तामणिश्च कठिनहृदयोऽसत्रासाश्चिन्तितमात्रप्रदायी विभाव्यते । कर्णोऽपि सामजुषि स्वपितरि कामस्य पूरको न

बभूव । पारिजातोऽपि यद्वितरणपराजितो मकरन्दमिषेण बाष्पमुत्सृजन्, तपस्यन्निव संगृह्य जटावल्कले वने ददृशे । किं बहुना ; निरतिशयवितरणपराजिताः पद्मशङ्खकच्छपमकराः शरणागता इव लाञ्छनच्छद्मना पादयुगलं यस्य भेजिरे ॥

तस्य खलु महाकुलभूभृत्प्रभवा भवानीव परमेश्वरस्य, नालीकवसतिर्लक्ष्मीरिव पुरुषोत्तमस्य, सत्पथवर्तिनी रोहिणीव सन्नायकस्य, भुवनपावनी भागीरथीव रत्नाकरस्य, सर्वमङ्गलोत्पत्तिहेतुर्मेनेव भूभृतां पत्युः, महाविभवलालिता ऋद्धिरिव धनदस्य, कलावती, कारुण्यवती, कान्तिमती, शान्तिमती, विनयवती, विभ्रमवती, विलासवती, विज्ञानवती, त्रपावती, नयवती, सत्यवती, केशभरे कृष्णा कर्णयोर्मणिकर्णिका कण्ठे मालिनी वाचि नर्मदा स्तनकलशयोस्तुङ्गभद्रा चरणतले ताम्रा सर्वतीर्थसंग्रहनिर्मितेव विधिना पुण्यचरित्रा, वाचि सत्या प्रज्ञायामनन्ता संभाषणे प्रियंवदा सपत्नीष्वनसूया चारित्रे शिवा रूपे सुरुचिः सुचरितेश्रुतकीर्तिः स्वभावे शान्ता वदनकान्तौ इन्दुमती वपुषि सुभद्रा सुकृतसंग्रहे सुदक्षिणा स्वान्ते सुनीतिः परिष्कारे भानुमती प्रदाने यशोदा सर्वपतिव्रतातेजःपुञ्जैरिव निर्मिता, पुनः सृष्टिरिवारुन्धत्याः, साक्षात्कृतिरिव सरस्वत्याः, समावृत्तिरिव जानक्याः, अवतीर्णिरिव पुलोमजायाः, आविष्कृतिरिव संज्ञायाः,

द्विरुत्पत्तिरिव दमयन्त्याः, रोहणस्थली गुणमणीनाम्, अरणिः पातिव्रत्यतेजसः, चन्द्रकला सौन्दर्यामृतस्य, प्रभातवेला प्रबोधबालभास्वतः, प्रदीपशिखा पापतिमिरस्य, वितानवेदी विवेकपावकस्य, मातृकेव पतिव्रतासर्गस्य, जन्मभूमिरिव शीलस्य, सर्गसमाप्तिरिव सौन्दर्यसारस्य, मनोरथसिद्धिरिव मकरकेतोः, सङ्केतस्थानमिव चारित्रस्य, तपःसिद्धिरिव सौभाग्यस्य, अनन्तगुणलक्षणा अभूदनन्ताम्बा नाम महिषी ॥

चन्द्र इव चन्द्रिकया, तरणिरिव दीप्त्या, राजीवदृशा तया व्यराजत राजचूडामणिः । अधिगतसकलैश्वर्योऽपि स राजा सुबहूनि दिवसानि सुतमुखावलोकनसुकृतस्य दूरे बभूव । तस्मिंश्च शासति चतुरर्णवमेखलां वसुन्धराम्, कदाचित् काण्डपटीभिरिव नभोमणिमण्टपस्य, कञ्चुलीभिरिव दिगङ्गनानाम्, कार्दमिकमुखपटीभिरिव ककुबन्तकरिणाम्, मयूरपिञ्छिकाभिरिव मदनैन्द्रजालिकस्य, सुरतनाटिकायवनिकाभिरिव सुभ्रुवाम्, पथिकाभिचारहोमधूमशिखाभिरिव विततभिर्जीमूतमालाभिः निबिडितरोदोन्तरा, नवघनरङ्गनर्तकीभिः गगननिकषपाषाणकनकरेखाभिः कालसुभटस्य घर्महृदयपाटनखड्गलताभिः वियति बाह्यालिन्दभुवि झटिति निजवाहनानि चारयतो मेघवाहनस्य करपरिविधूनितचामी-

करकशादेश्याभिः सौदामिनीभिः संभृतरामणीयका, मयूर-नटननाट्याचार्या, नारायणनिद्रानिशा, कादम्बयात्राविप्रश्निका, कन्दलपरिहासकेलिविदुषी, शतमखधनुःशाला, मातङ्गमदकादम्बरी, कदम्बसौरभाकर्षणविद्या, वर्षाभूकलकलसंदर्भवाग्देवता, विरहिजनप्राणभीमरथी, पुरोमारुतफूत्कारभुजगी, रागराज्यक्षत्रियाणी, कमलवनबोधतन्द्रा, भास्करप्रतापप्रव्रज्या, सुतनुरिव स्वैरम्मदविलासमातन्वती, लुब्धसंपदिव नवनीपकहर्षदा, सुराङ्गनेव स्वरूपरिगता, कुरुपाण्डवरणभूमिरिव प्रकटितार्जुनशिलीमुखपाता प्रावृडाविरासीत् ॥

सा खलु दर्शितसीतानुवर्तना दशरथतनयलीलेव विधृतविचित्रकोदण्डा भुवि पातयामास कबन्धम् । अर्जुनहर्षदायिनी द्रौपदीव विमुक्तघननीलवेणिर्धार्तराष्ट्रकुलक्षोभमाततान । दाशरथिरिव जलदो जलनिधिमुल्लङ्घ्य धृतजिष्णुचापमण्डलः, सकलजगत्तापमापादयन्तं घर्मदशकंधरं निहत्य चिरविरहेण सीदन्तीं सीतामाश्वासयामास । तरलबलाकास्थिमालिकां कालीमिव कालिकामालोक्य विचलितशिखण्डार्धचन्द्रो हर्षेण ननर्त नीलकण्ठः । त्रिनयनदग्धदनुजपुरत्रयस्य सदनाङ्गणदाहजानि क्वचित्क्वचित्सज्वलनशङ्कान्यङ्गाराणीव निर्वाणानि वियति विदिद्युतिरे विसृमरविद्युन्ति मेघजालानि । तारगभीरं स्वनन्ती

प्रहृष्टवत्सा प्रस्नुतपयोधरा प्रावृडपदेशा कृष्णा गौः, उद्धुरधाराध्वनीनि फेनायमानानि पयांसि दुहाना भुवनकुडुम्बं पुपोष । अम्बरसरसि विरचितकरक्षेपमम्बुधरशिलासु शम्पापटीस्ताडयामास नीरदसमयनिर्णेजकः ।

क्रमेण च नवजलपृषतपानहृषितचातककुले, पोषितमदनभुजवीर्ये, शीर्यमाणचौरीमुदि, कदम्बानिलघण्टापथे, प्रोषितपरुषभासि, हंसकुटुम्बोच्चाटनमन्त्रवादिनि, शमितकरीषरजसि, शिरीषश्रीमुषि, मुषितमृगतृष्णाविमोहे, बन्धुरशिलीन्ध्रगन्धे, शक्रगोपसृष्टिकर्मान्तसदने, मधुकरशरण्ययूथिकारण्ये, विद्युन्नटीनटनसूत्रधारे, सुत्रामशरासनद्युतिद्योतितद्युतले, नखंपचरमणीकुचमण्डले, खण्डितदवायुषि, माद्यदिभे, भेकपटलरटितवाचाटे, कुटजकोरकामोदमेदस्विनि, ककुभकुसुमवासितककुभि, कुक्कुटकूजितानुमीयमानविभावरीविरतौ, मुदिररासितबधिरितहरिति, विधुरहृदयभिदि, भिदुरपतनभीतप्राणभृति, मल्लिकाविकासदूषके, मालतीहासविदूषके, निर्वाणदिनमणिशिलाजातवेदसि, मृगकुलमार्गितशार्करस्थले, कुररकुलकुशलपाटच्चरे, शिलोच्चयनिर्झरसिरामोक्षभिषजि, विद्युत्प्रभाभीलभीलुकफणिनि, वनलुलायतापलुण्टाके, धृतबर्हचण्डातकबर्हिणवितन्यमानललितलास्ये, शीतालुतादीनगोमिनि, धाराहतिदूनधेनुके, नीरदनिचोलनिगृहीतनिशाकरा-

दर्शे, सरसतरपलाशपलाशवने, कूलंकषसरित्स्रोतासि, कुण्ठितनक्षत्रधाम्नि, बलाकासुहृदि, विकासोन्मुखकेतकीसूनसौरभ्यसंपदि, घर्मविरतिजातवनवराहशर्मणि, पथिकाङ्गनापमृत्यौ, जगदेकतोयकर्मान्तिके, वञ्चितपथिकसंचारे, विमलतरतारकाकारकरकासारशारधरणितले, निद्रामुद्रितमुरद्रुहि, दरिद्रद्विषि, तृण्यातारुण्यरसायने, परिणतिमासेदुषि पयोधरानेहसि, संतानकाङ्क्षी धरणिपतिरमरपतिपूजां रचयितुमारेभे ॥

ततो महीपतिः स्नातानुलिप्तः सितकुसुमवसनधारी, बाह्याङ्कणमध्यमणिवेदिकास्थापितम्, अदृष्टिगोचरोच्छ्रायम्, काञ्चनमयम्, उत्सर्पिभिरंशुभिः कपिशयन्तमन्तरिक्षावकाशम्, हिरण्मयीरिव दिशो विदधानम्, अनिलतरलेन धरणिपतिसंतानाभावसंतापमिवापनुदता मध्यभागविलिखितम्, कल्पद्रुममञ्जरीकलितकर्णावतंसम्, करकलितधवलचामराभ्यामुभयपार्श्वगताभ्यामुर्वशीरम्भाभ्यामुद्भासमानम्, कमलकर्णिकागौरकायम्, कर्पूरधवलद्युतिमत्युन्नतप्रमाणमैरावतमधिरूढम्, अन्तिकलक्ष्यमाणेन तैजसेन धनुषा दीप्यमानस्ववाहनम्, पश्चाद्भागस्थितायाः सर्वसुपर्वाङ्गनावन्दितचरणारविन्दाया देव्याः पुलोमजाया मन्दस्मितमधुरमङ्कुरितरागमनङ्गसर्वस्वमाननमपाङ्गितया प्रेमरसवर्षिण्या कयापि दृशा स्मितविकसित-

कपोलमीक्षमाणम् , विश्वंभराविभवविलोकनविस्मयस्तिमितै-रिव निर्निमेषैर्नेत्रैरम्बरसरःपुण्डरीकवनमिव संपादयन्तम् , त्रिभुवनत्राणकर्तृणा दुःसहसमरसंरम्भजम्भकबन्धताण्डवसूत्रधारेण प्रबलनमुचिप्राणपवनपानफणिना बलासुरवधूविलापाचार्येण वृत्रासुरापमृत्युना निर्भरादितिगर्भनिर्भेदनृशंसेन विरचितविविधगिरिपरिषद्रुषा विघटितविलोमपुलोमवपुःक्षोमबहुलरुधिरपूरमज्जनकेलिरसिकेन वज्रायुधेन सनाथीकृतपाणिं शतमखमुद्वहता पताकापटेन कामपि कान्तिं कन्दलयन्तमिन्द्रध्वजमर्चयितुमाससाद ॥

तदनु बहुलपरिमललहरीमिलितमधुकरकुलैः सकर्पूरचन्दनजलसेकललितैः कमलकल्हारचम्पकमालतीकुटजप्रायैः कुसुमनिचयैरभ्यर्च्य पुरन्दरं परमया भक्त्या प्रणम्य पुरस्तिष्ठन् , 'भगवन् , भक्तवत्सल, पौलोमीवदनकमलमार्ताण्ड, त्रैलोक्यरक्षाधुरंधर, सकलसुरकोटीरकुसुममालामकरन्दवर्षसुरभितचरणारविन्द, देवदेव, देवेन्द्र, योजय मां कुलप्रदीपेन कुमारेण' इति पुनः पुनः प्रार्थयामास । अत्रान्तरे केलिमयूरमुपलालयन्ती मयूरपालिका पुनरिमामार्यां पपाठ—

'अनुभव मयूर सौख्यं
तव हृदयं भवतु सान्द्रसंतोषम् ।

मेघोदयं विडौजा

दिष्ट्या जगदवनहेतुमातनुते ॥'

राजा तु तामुपश्रुतिमाकर्ण्य हर्षपरवशः, शुद्धान्तमुपेत्य, देवीं विदितवृत्तान्तामकरोत् । देवी च जहर्ष तेन भर्तृवचनेन ॥

ततः शतमखप्रसादेन कतिपयदिनापगमे मणिमिव रोहणस्थली, निधिमिव भूतधात्री, विश्वमिव नारायणमूर्तिः, विवेकमिव विद्या, गन्धमिव चन्दनलता, धर्ममिव स्मृतिः, माधुर्यमिव इक्षुलता, विनयमिव अभिजातिः, अर्थमिव सुकविसूक्तिः, अध्वरमिव त्रयी, त्रिभुवनकुशलाय देवी दधौ गर्भम् ॥

सा वसन्तवनलक्ष्मीरिव किसलयं नयनसंवननमधत्त लावण्यम् । क्षितिपतिकुमारस्य गर्भगतस्य मुखप्रसादेनेव प्रसरता पस्पृशे भृशं पाण्डिम्ना । तस्या दुष्टनृपवनादिधक्षया ज्वलिष्यतो नृपकुमारज्वलनस्य पुरः प्रसृतं धूमकन्दलमुद्गमादिव मुखेन आनीलचूचुकमराजत कुचयुगलम् । अन्तःस्थितस्य राजकुमारस्य सेवायै सविधवर्तिन्याः श्रियः पाणितरलितपद्मव्यजनपवनानुकारिणस्तस्याः पदे पदे प्रासरन्निश्वासाः । यथा यथा गर्भगौरवेण भूरि खेदनिश्वसितममुञ्चत राज्ञी, तथा तथा लघुरभवदहिराजस्य निखिलभुवनभारभरणजो

निश्वासः । तस्या निर्भरगर्भावलोकनसमयेषु विमलकुचतट-प्रतिबिम्बितमाननमन्तर्गतराजसुतनिषेवणाय ध्रियमाणमिव लक्ष्म्या पुण्डरीकातपत्रमलक्ष्यत । भवनाङ्कणचंक्रमासहापि चतुरर्णववलयवेलाविहारमुदकण्ठत कम्बुकण्ठी । क्लाम्य-न्त्यपि भूषणवहने त्रिभुवनभारमुद्वोढुमचकमत कमलाक्षी । निर्भरगर्भखिन्नायास्तस्याः परिचारिकानिदेशेषु केवलं भ्रूल-तैव चचाल । गुरुजनदर्शनेषु मनसोत्थातुमुदसहत । निशि निशि स्वप्नेषु सा करकलितकनककुम्भमुखोज्झितेन वारिणा दिग्गजैः क्रियमाणाभिषेकमपश्यदात्मानम् ॥

अथ परभृतपञ्चमसंदर्भदेशिके, मलयानिलबालसुहृदि, तुहिनरुजोल्लाघकमलवने, मधुकरचषकायमाणवकुलकुसुमे, वनलक्ष्मीमङ्गलमणिप्रदीपायमानचम्पकस्तबके समुन्मिषति मधुमासे, आसेदिवत्सूच्चस्थानानि ग्रहेषु, निखिलभुवनाभ्यु-दयनिदाने पुण्ये लग्ने, विबुधप्रार्थितोदयं गौरीव कार्तिकेयम्, अविषह्यप्रतापं विभातवेलेव विभावसुम्, वसूपमं सुतमसूत देवी ॥

तदानीमतिसुखस्पर्शो मानुषलोकदुर्लभं तत इतो विकचरु-गन्धमनिलाः । प्रदक्षिणज्वालावलिरनिन्धनापि जज्वाल यज्वनां गृहे गृहे त्रेता । सकलभुवनाभ्युदयमङ्गल्यपटहाय-

मानेन मधुरगम्भीरेण स्वरेण पूरयत् आशाकुहराणि हर्षनिर्भरं जगर्ज वारणकुलम् ॥

सुतजन्ममहोत्सवहर्षितो राजा वरुणेनाप्यदृष्टपूर्वाणि रत्नानि कुबेरेणाप्यज्ञातचराणि मेरुकूटकोटिसंकाशानि धनानि वितताार ॥

अथ धर्मविदा पुरोहितेन सह नरपतिरवरोधान्तरं हर्षपरवशः पद्मामेव गत्वा, कुङ्कुमपिङ्गलेन स्वतेजसा लिम्पन्तमिव भवनोदरम्, अवनिगर्भादुद्यन्तमिव लोहिताङ्गम्, अङ्कशायिनं मातुरर्भकं रोमाञ्चपुषा वपुषा निवेद्यमाननिर्भरहर्षो निमेषनिःस्पृहाभ्यां लोचनाभ्यां चिरं ददर्श। अथ नृपतिरपरिधिरिव पतङ्गो रुरुचे चिराय तृतीयादृणादुन्मुक्तः ॥

अथ समसमयताडितपटहशतपटुनिनदबधिरितभुवनम्, अनवरतनटनचटुलवारयुवतिकुचतटपतितहारमणिनिकरतारकितधरणितलम्, उल्बणमदविकटकुटहारिकाकुचतटाश्लिष्टसलज्जसामन्तचक्रजनितजनहासम्, उत्क्षिप्यमाणकर्पूरधूलिपटलसुरभितवियदन्तरम्, सस्मितधरणिपालावेक्ष्यमाणक्षुद्रकटककुट्टिनीसमालिङ्ग्यमानजरत्प्रव्राजकम्, प्रमदभरप्रनृत्तपार्थिवलोकपरस्परास्फालितभुजमणिकेयूरचक्रकेङ्कारमुखरम्, अतिबहुलविकीर्यमाणकुङ्कुमपांसुपुञ्जपिञ्जरितदशादिशम्, उ-

न्मुखकुब्जवामनकराकृष्यमाणवृद्धकञ्चुकिकुलम् , उत्सवकोलाहलसंकुलं रराज राजभवनाङ्गणम् ॥

ततः समुचिते दिवसे धर्मविदां वैदिकानां मध्यं गतो नृपतिरात्मजस्य सकलभुवनकण्टकाभिचारमन्त्रं श्रीवेमभूप इति नामधेयमकरोत् । आबद्धरक्षावलयभूषणम् , अहर्निश रक्षःकुलगोचराद्रक्ष्यमाणम् , अनुकलविजृम्भितैः स्मितैः अमातृकुलस्तन्यदीनम् अबन्धुपरिलालनं वटदलशायिनं नारायणशिशुमिव हसन्तम् , समधिकौत्सुक्यधात्रीकुलपरिवेष्टितं कृत्तिकामध्यगतमिव कुमारम् , मातुरासन्नवर्तिन्या हृदयलम्बिनि हारतरलरत्ने प्रतिबिम्बितावयवतया सततपयःपानवाञ्छया स्तनान्तरमिव निरन्तरमधिवसन्तम् , पुनः पुनराननिहितचरणाग्रतया मधुरमधुरं निजपादाङ्गुष्ठगङ्गारसमास्वादयितुमाविष्कृतबालभावमिव पुण्डरीकाक्षम्, संलग्नजननीस्तन्यशीकरमिव दृश्यमानदन्ताङ्कुरमाननकमलमुद्वहन्तम् , प्रथमसंजल्पितविसृमरैर्विमलदन्तांशुभिरङ्कुरणमिव सत्यस्य दर्शयन्तम्, बालशशिनमिव दिने दिने समेधमानमात्मजं प्रतिपदमालोक्य पार्थिवो मुमुदे ॥

अकारणस्मितमनोहरम् आलक्ष्यविरलदन्ताङ्कुरम् अरुणाधरद्युतिरञ्जितम् आत्मजवदनकमलम अजिघ्रदसकृदामी-

लितलोचना जननी। धात्रीकराङ्गुलिमवलम्ब्य कृतवति पदद्वयं क्षितौ क्षितिपालकुमारे, तमेवावलम्ब्य चतुर्भिः पदैश्चरितुमुपचक्रमे धर्मः । विरलपदविन्यासश्चरन्, मणिकुट्टिमगतमात्मप्रतिबिम्बमालोक्य सहविहारकौतुकी वयस्यधिया मुहुर्मुहुरायस्तहस्तः समाजुहाव ॥

अथ जन्मनस्तृतीये वर्षे गुरुरवनिभृतां गुरुवत्सलं गुरुधियं कुमारं गुरुभिरक्षरशिक्षामकारयत् । निसर्गसंस्कारनिर्मलहृदये तस्मिंश्चन्द्रमसीव संचक्राम सकलः कलाकलापः ॥

ततः सकलभुवनभागधेयजीवातौ पञ्चमं वर्षमवतरति कुमारे, भूयोऽपि देवी गर्भेण देवकीव पुण्डरीकाक्षमधत्त माचभूपालम् । असूत च सकलसुमनःश्लाघ्यप्रभावं जयन्तमिव इन्द्राणी, प्रथिततेजसं पावकमिव अरणिः, अमृतशीतलप्रकृतिं शशिनमिव अत्रिदृष्टिः, अविरतमहावीरसेवितमध्वरमिव त्रयी, प्रकटितपद्मोल्लासनं द्युमणिमिव विभातवेला, द्वितीयं कुमारम् ॥

ताभ्यां च सहजतेजःप्रसराभ्यां धरणिपतिकुमाराभ्यां त्रिसूर्यमिव भुवनमासीत् । क्रमेण चानतिक्रान्तशैशवौ तौ, निखिलभुवनास्त्रविद्यागुरोः पितुरेव करमुक्तपूर्वकाणि चतुर्विधान्यायुधान्यशिक्षेताम् । ततस्तौ प्राप्तयौवनौ सुरकरि-

शुण्डापीवरभुजौ, महोरस्कौ, वृषस्कन्धौ, सुवृत्तश्लक्ष्णोरू, दृढप्रकोष्ठौ, समविभक्तावयवौ, सालप्रांशू, तपनाभिभावितेजसौ, कुमारौ पितरमपि वपुषा व्यजेषाताम् ॥

पृथ्वीपतिसार्वभौमः पेद्दकोमटीन्द्रोऽपि चक्रवर्तिलक्षणोपेतं ज्यायांसमंसलभुजं तनयमवनिभरणक्षममालोक्य, तस्मिन्नेव आससञ्ज चतुरर्णवमेखलाया धुरं धरण्याः । स खलु शान्ते पितरि, चतुरर्णवमेखलां धरणिमुद्वहन्, कालानलसंतापितेन, घोराशनिकूटताडनकृतद्राघिम्णा, निपीतकालकूटविषरसेन, निजकरदण्डकोदण्डनिघर्षणजातशातिम्ना, कृतेनेव कृतान्तायस्कारेण, दर्शितस्थूलदन्तमण्डलेन मुखेनेव मृत्योः, मदकुम्भिकुम्भपाटनपटुना नखरेणेव शौर्यसिंहस्य, कलितकरालांशुकेसरेण कर्णोत्पलेनेव कालरात्रेः खड्गेन महता खण्डिताशेषरिपुमण्डलः, दिक्पालेष्वपि पश्यदलिकं पुमांसम् अन्तरेण दुर्जयं कमपि नकलयन्, मार्ताण्ड इव महाकुलभूभृतां मौलिषु पादमादधानः, पुनरपि भुवि प्रार्थनावतीर्ण इव पुण्डरीकाक्षः, बहुविधदानप्रवर्तनेन कलियुगखञ्जं धर्ममुल्लाघयन्, भुवनविरावणयवनरावणबलविरामरामः, दिग्गजेऽपि सार्वभौमश्रुतिमक्षममाणः, काननेऽपि खड्गिविक्रमकथयाप्यसुखायमानहृदयः, सकलमहीभृतामाधिपत्यमचलेन्द्रस्याप्यसहमानः, चन्द्रमसोऽपि राजशब्देन दूयमानः, आलेख्यक्षितिपतिकलितैर-

ण्यातपत्रभद्रासनपट्टबन्धचामरैरमृष्यमाणनयन.. चित्रपुरुषमुखेभ्योऽपि जयजीवोक्तिमिच्छन्, इन्द्रादीनामपि लोकपालाख्यया स्पर्धमान:, कुबेराय राजराजव्यपदेशेन बलवदभ्युसूयन्, पशुपतेरपि वृषकेतने प्रतिध्वजशङ्कामङ्कुरयन्, स्वैरपदप्रचारकेलिषु चरणकमलरेखातपत्रचामराणि भुवो महादेवीपट्टबन्धचिह्नानीव दिशन्, हिरण्यदाने वदने वैकृतमवापेति शार्ङ्गधन्वानं विमन्वान:, जीवनप्रदानसमये प्रकटितचापलवृत्तिरलं गर्जतीति तर्जयन्पर्जन्यम्, दर्शयति कन्यापतित्वमिति बुधमबुधमाकलयन्, पुन: पुनर्ज्येष्ठामनुवर्तत इति रोहिणीजानिमवजानन्, सततजलदुर्गवासीति प्रचेतसमचेतसं गणयन्, दुर्जन इव स्पर्शनेन विना न भवति जनैर्ग्राह्य इति पवमानमवमानेन योजयन्, वारुणीसङ्गादपगतवसुरध: पततीति ब्रध्ने मुदं नबध्नन्, कठोरे खरारातिरणे त्रिपदानिवृत्ति: कृतेति रघुपतिवीर्यश्लाघां लघयन्, दु:सहकोपानलदग्धरिपुपुरसहस्रतया देवस्य पुरत्रयदहनप्रशंसामचमत्कुर्वन्, भोगिपतिरिव कलितक्ष्माभरण: दुर्योधन इव कर्णानुकूलचरित:, नारायण इव सच्चक्रनन्दक:, विधुंतुद इव सकलराजमण्डलग्रहणनिपुण:, शब्दागम इव गुणवृद्धिप्रत्यययुक्त:, हेमन्त इव हैमवर्षप्रवर्तक:, प्रज्ञोन्मेष इव बहुधारणोचित:, चक्रवर्तिलक्षणोपेतो दशदिगन्तविख्यातभूमा विजयते वेमभूपाल: ॥

यस्य खलु यशोबिन्दुरिवेन्दुः, प्रतापानलस्फुलिङ्ग इव पतङ्गः, रूपनिर्माणद्रव्यकणिकेव कन्दर्पाकृतिः, दानाम्बुलेश इव सागरः, भ्रूपरिचारिकेव लक्ष्मीः, नर्मसुहृदिव धर्मः, भुजाङ्गदमिव भूवलयं च विभाव्यते। यस्य खलु चञ्चलमणिकुण्डलकोटिखचितनिस्तुलमुक्ताफलशिशिरकरकिरणचन्द्रिकाशीतलं मांसलांसतटमणिपर्यङ्किकामध्यमध्यासीना दुर्विषहविषज्वरवेदनाविपणिफणिपतिफणापटलदुरासिकादुःखमत्यजदनन्यसाधारणी भगवती भूतधात्री । यस्मिंश्च परिपालयति वसुन्धराम्, वासवधनुषि वर्णसांकर्यम्, वल्मीकेष्वहिभयम्, वारणवदनेष्ववग्रहयोगः, वारिदेषु जीवनभ्रंशः, ग्रहेषु वृषातिक्रमः, यतिषु परदर्शनम्, कुवलयेषु दोषोल्लासः, मृगयुषु रौरवपदानुसरणम्, इभकर्णतालेषु तरलता, सरसीषु विपक्षक्षोभः, चन्दनेष्वात्तगन्धत्वम्, पद्मेषु राजप्रतिकूलता, पन्नगेषु द्विजगुरुद्वेषः, भ्रमरेषु कुसुमेषुभ्रान्तिश्च भवति ॥

तस्य च साक्षादुपेन्द्र इव सहस्राक्षस्य, अनुजन्मा वर्णव्यवहारानिर्णयनिपुणः, सम्यगुपयोक्ता षाड्गुण्यस्य, रञ्जितप्रकृतिः, धर्मधवलचारित्रः, साहित्यसंगीतजीवातुः, वीणावेणुवादनप्रथमसंप्रदायः, विद्वन्मणिनिघर्षणनिकषः, शंकरचरणसरसीरुहपरिचरणषट्चरणः, रिपुयुवतिकपोलस्थलीमरकत-

ताटङ्कप्रभाशन्तिनिदाघतपनः, प्रज्वलता प्रतापौर्वेण शोषय-न्विपक्षक्षितिपतिकीर्तिक्षीरोदान् , अप्रणमतामाशापतीनां शासनपत्रिकामिव विधृतबहुपुद्गलाक्षरामसिपुत्रिकामुद्वहन् , शीतकरदीधितिशुचीनि त्यागध्वजांशुकानीव यशांसि दिगन्तरेषु संचारयन् , महीपतिचक्रमौलिमहानीलचूडामणिद्युतिमषीभिः शासनपत्रिकां रञ्जयन् , पारीणः कलानाम् , प्रथमः समीक्ष्यकारिणाम् , प्रष्ठः सांयुगीनानाम् , आदिर्विदग्धानाम् , अग्रेसरो रसिकानाम् , अपश्चिमः शूराणाम् , अपमृत्युरधर्मस्य, कुलगृहं विद्यानाम् , कूटस्थः स्थूललक्षाणाम् , घण्टासरणिः सत्यस्य, विपाणिः पुण्यपण्यस्य, तरणिरज्ञानतिमिरस्य, अरणिः शौर्यज्वलनस्य, सृणिर्दुर्मदरिपुद्विरदानाम् , अध्यायतिथिरस्त्रविद्यानाम् , प्रणवः प्रज्ञोपनिषदः, मन्दरः श्रीसमुत्थानस्य, कनकशैलः क्षमाधरणस्य, प्रथमगिरिः प्रतापतपनोदयस्य, श्रीपर्वतश्चिन्तितसिद्धीनाम् , हिमालयः सर्वमङ्गलोद्भवस्य, जागर्ति चतुर्भुजप्रभावो महाभुजो माचभूपालः ॥

यस्य च पुनरङ्गनामनःप्रियंभावुकभावस्य सार्वभौमस्यापि न स्पृशति मदो मानसम् । यश्च सर्वभुवनवन्द्यः परमेश्वरोऽपि वृषमुपरि करोति । यः पुनरासादितारिचक्रः पुरुषोत्तमोऽपि न भवति वृषविरोधी ॥

तेन खलु दुरुत्सहप्रतापेन शरत्समय इव सवित्रा, दुःसहहेतिस्फुरणेन पशुपतिरिव फालनयनाग्निना, मदकरिकुम्भस्थलीपाटनपटुना सिंह इव नखरेण, महाकुलभूभृत्पक्षक्षपणदक्षेण वासव इव वज्रायुधेन, मनोरथफलसंपादकेन कुबेर इव निधिना, समग्रगुणप्रसूतिना भ्रात्रा व्यद्योतत वेमभूपालः ॥

तस्मिंश्च शासति धरणिमण्डलम्, कदाचिज्जलधरपङ्कशोषेण दिवमहिमकरपादसंचारयोग्यां वितन्वन्, वनानामिव पार्थिवानां दिशि दिशि पत्त्रथप्रचारकलकलान्कलयन्, वैद्युतानलदाहभस्मीकृतानिव पाण्डुत्विषः पयोदान् प्रदर्शयन्, प्रावृषि बिडौजसा वियति संचार्यमाणानां मेघवाहानां तत्करपटुकशाघातस्फुटितैः शोणितबिन्दुभिरिव बन्धुजीवैः क्षितितलमलंकुर्वन्, दावानलस्फुरणाय मुर्मुरानिव सप्तच्छदकुसुमपरागान प्रतिवनं प्रविकिरन्, तत इतस्तरलमरालपक्षविक्षेपैर्दुर्विषहवज्रानलमहोष्मसंतापितां द्यामिव वीजयन्, मण्डूकवाग्बन्धनमान्त्रिकः, मालतीपुष्पविरतिजरागमः, सूर्यकान्तपावकसमिन्धननाडिंधमः, सौदामिनीनृत्तकालावधिः समाजगाम शरत्समयः ॥

स्फटिकशुचिसलिलपरिधौतमपगतघनमलमातपस्पर्शि हंसधवलमम्वरमातन्वती रजकीव शरदहृश्यत । पाकवशवि-

शीर्णदिशाशाल्मलितरुतूलराशिदेशीयानि विततवियदुरगनिर्मोकशकलविभ्रमाणि तत इतो बभ्रमुरभ्रमुपाततनुधाम बिभ्रति शरदभ्राणि । प्रथममधिकजीवनेषु विरचितविहृतयः पश्चात्परित्यक्तसारेषु पयोदेषु वेश्या इव न तस्थुरस्थिररुचयो विद्युतः । आदौ रजस्वलानामनन्तरमम्बुधरमणिकुम्भाम्बुसंभृतस्नपनानां पश्चादच्छाम्बरान्तरितचन्दनपाण्डुपयोधराणामाशायोषाणामुपरि पूषा रुचिं बबन्ध । शरदि विरतिभाजां बिन्दुशेषाणि निर्गमद्वाराणीव धारावारामदिद्युतन् द्युतलमविरलं रजनिशुक्तिमुक्ताफलसदृक्षाणि ऋक्षाणि ॥

तस्मिंश्च शीर्यमाणजलदवीर्ये, ताम्यत्तटिति, गर्हितबर्हिणमुदि, वर्षाभूहर्षकर्षिणि, मदमन्धरसिन्धुरे, बन्धुजीवजीवातौ, विकस्वरविवस्वति, शुचिशशलक्ष्मणि, द्योतमानज्योतिषि, गुञ्जत्कुञ्चि, कुण्ठिताखण्डलकोदण्डे, दण्डयात्राव्यग्रसमग्रभूभृति, सारसरसितसारसरसि, चातकमोदघातुके, कन्दलद्रुहि, कान्दिशीककदम्बकुसुमसंपदि, भृङ्गमनःप्रियाप्रियके, कुट्मलरेचितकुटजे, प्रोद्दामद्युमणिद्युतिद्योतितद्युतले, संफुल्लकह्लारतल्लजसौरभ्यसुहृदि, संवर्तिकावलयशालिकुवलये, नीराजनमङ्गलविराजमानवाजिनि, व्याकोशकाशे, सप्तच्छदकुसुमरजश्चयच्छन्नहरिति, चामीकरवर्णकर्णेजपशालिकणिशकपिशितशा-

लेयसीमनि, सिन्धुपुलिनरिरंसाकुलकलहंसे, तरुणतामरसहारिवारि, परिणतश्यामाकमङ्गलदर्शनजाङ्गलक्षेत्रे, कर्दमक्षयिणि, माद्यदुक्ष्णि, मोदमानकुमुदसमुदयधवलितदिशे, शीफरशेफालिकामोदवासितनिशीथे, पक्त्रिमत्रपुसफले, फलिनीपरागभृति परिणमति शरत्समये, नरपतिरलघुना दण्डेन दिग्विजयकौतूहली गन्तुमुदमनायिष्ट। बाह्यालीमिव महीमतिजवनतुरगखुरशिखरक्षुण्णां विरचयितुमचकमत । आत्मीयहयखुरदलितभूतलपरागभूतिभिरभितो धनमदपिशाचिकां प्रशमयितुमियेष ॥

अथ नरपतेर्दिग्विजययात्रामुद्घोषयन्ती गभीरभैरवं रराण भेरी । ततो मदपरिणतिविहृतिसहर्षहेरम्बदशनकुलिशकोटिसाटोपभिद्यमानहाटकगिरिकूटरटनरीढाकरेण, युगविगमक्रीडदादिमघोणिविकटघोणाकोणघोराहतिघुमघुमायमानरसातलकुहरघोरघोषभीषणेन, प्रबलसुरविपक्षाध्यक्षवक्षःस्थलदलनदक्षखरतरनखरनखरायुधनिष्ठुरगलघर्घरनिर्घोषकटुना, चटुलतटिद्दण्डताडनरसितसजलजलधरधीररवावधीरणाधुरीणेन, समररसोत्कण्ठचण्डिकागर्वशस्त्राशस्त्रिचतुरकासरासुरकण्ठचण्ड क्ष्वेडाक्रीडाकरेण, संवर्तताण्डवोच्चण्डखण्डपरशुकरतलतरलनोड्डामडमरुडात्कृतिनिकृतिकृतिमुखेन, काठिनपृथुधनुरटनिघटनकृतलुठनगुरुगिरिनिकुरुम्बस्फाराशिलापटलपरस्पराघातस्फा-

यमानध्वानभङ्गिभयंकरेण, मथनसमयमन्दरगिरिकन्दराघा-
तक्षुभितकलशजलधिकल्लोलघनास्फालनस्तनितस्थौल्यस्थगनप-
टीयसा, मदिरामदहर्षणसंकर्षणकठिनहलहठाकर्षणविचलित-
कालिन्दीतुङ्गतरङ्गकूटकोलाहलगर्वसर्वंकषेण, दनुजपुरत्रितय-
निर्मन्थनिर्गत्वरमृडदृढभुजकूटकुण्डलितसुमेरुकोदण्डटंकृति-
विभ्रमसब्रह्मचारिणा, ब्रह्माण्डकबलघस्मरेण सुमहता मुहु-
रुद्हायत संनाहपटहघोषेण। किंच, अश्रुतपूर्वरवभयोन्मुक्तह-
रिदिभघटाकटुगर्जितैर्विरचितद्विर्वचन इव दिक्षु, गम्भीरकल्लो-
लरसितैरुपचरित इव जलधिषु, वैजयन्तचन्द्रशालाहतदिव्य-
दुन्दुभिध्वनिभिः कृतहस्तावलम्बन इव दिवि, चक्रवालधर-
णिधरप्रतिश्रुता प्रत्युद्यात इव भुवनान्तेषु, कूलंकषपूरभोगव-
तीवारिकलकलैः कृतातिथ्य इव पातालसीमनि च बभ्राम
नृपतिनिर्याणशंसी निस्साणनिनदः॥

तदा महामात्यो राजगृहद्वारि हस्तिपकैरानाययामास घन-
संघातमिव करिरूपेण परिणतम्, अञ्जनगिरिमिव कुञ्जर-
त्वमुपगतम्, कज्जलमलिनया कायकान्त्या ककुभां चक्रवा-
लमाविलयन्तम्, अविच्छिन्नमदजलधारं सनिर्झरोद्गारमिव
विन्ध्यगिरिम्, प्रतिभटदुर्गाण्येवं पांसुपेषं पिनष्मीति स्वहृ-
दयनिश्चयं सूचयन्तमिव करेण पुनः पुनरवनिपरागमादाय

विकिरन्तम् , विगाढमदतापज्वरातितिक्षयेव अन्यस्य करिणः सार्वभौमशब्दयोगपरिभवेनेव पुनः पुनर्विमुक्तशूत्कारम् , वियन्नदीकमलमृणालजिघृक्षयेव बहुशः शुण्डादण्डमुत्क्षिपन्तम् , अनवरतोज्झितैरुपरिकरशीकरासारैः पत्युः प्रतापतपने प्रकाशयति मही किमनेन निष्प्रयोजनेनेति दिनकरतेज इव निर्वापयन्तम् , अभिषिञ्चन्तमिवात्मानमखिलगजाधिपत्ये, संततपातिना दानाम्भसा दुःसहमदज्वरविलीनस्यात्मनः क्षरणमिव सूचयन्तम् , पुरतः प्रसर्पता कर्पूरखण्डत्विषा दन्तकाण्डमहसा भग्नैकदन्तमेकदन्तामिव हसन्तम् , कल्पान्तघनाघनघटारटनकटुना स्फुटितजगदण्डभित्तिना कुलगिरिकुहरपूरकेण कण्ठगर्जितेन भाययन्तमिव धरणिधरगुहाशायिनः सिंहान् , असकृदुत्क्षिप्तेन लोलाग्रेण करेण भोगेच्छया कपिलादीनां करिणीनामाकारणसंज्ञामिवारचयन्तम् ; विविधगिरिवप्राघातकलितायासं संवाहयन्तमिव विषाणमेकं द्राघीयसा हस्तेन पुनः पुनरावेष्टयन्तम् , अन्तरान्तरा मदपरिणतिव्याजेन महीतले शितदशनलेखिन्या स्वामिनो विमतनृपविजयकीर्तिगाथामिव विलिखन्तम् , अविरततरलकर्णतालपवनैः स्थूलपदन्यासवेदनामिव मेदिन्या व्यपनयन्तम् , प्रज्वलयन्तमिव भर्तुः प्रतापानलम् , गम्भीरेण गर्जितातोद्यरवेण कलितकलापचण्डातकानि गृहशिखण्डिम-

ण्डलानि अकाण्डे ताण्डवयन्तम् , प्रतिगजरसितशङ्कया दिग्विजययात्रापटहनिनदमतरलकर्णमाकर्णयन्तम् , पद्मासनसनाथमधिगतपृथुलदन्तमुक्तास्तम्भमरहितमणिपूर्णकुम्भमावासमण्डपमिव श्रियः. प्रतिक्षणकुण्डलितकरतया सकलभुवनधौरेये वर्तमाने भर्तरि किमनेनालीकभुवनधुर्यतादुर्विदग्धेनेति भयकृतभोगपरिवेष्टनं फणिपतिमिवोद्धृत्य दर्शयन्तम् , निरन्तरनिहितसिन्दूरपरागरञ्जितशिरसम् आलग्नबालातपारुणशृङ्गमञ्जनगिरिमनुकुर्वन्तम् , स्थूलशिरोलम्बया नक्षत्रमालया मन्दरगिरिमिवोपरि विलसच्छायापथम् , असकृदाकम्पितमस्तकतया भूयसीषु समितिषु स्वभर्तुर्भुजापदानं स्मृत्वा स्मृत्वा कृतशिरःकम्पमिव श्लाघमानम् , अभ्यर्णमणिकुट्टिमतलसंक्रान्तप्रतिबिम्बतया दुर्वहस्वभारभरणदूनस्य फणधरसार्वभौमस्य साहाय्याय विभज्येवात्मानमवतारयन्तम् , अतिदूरप्रसारितशुण्डतया स्वकुलपरिपन्थिनां सिंहानामावासदानजातागसः कुलभूभृत इव आक्रष्टुमभिलषन्तम् , उपरि विसार्पिण्या उन्नतदेहप्रभवया प्रभया गगनचराभिसारिकाणामभिसरणनिशामिवाकाण्डे घटयन्तम् , अन्तरिक्षेऽपि मन्दाकिनीसखीं कालिन्दीमिव प्रवर्तयन्तम् , प्रथीयसि सत्यवग्रहे परनृपतेजःप्रशमायेव मदवर्षदुर्दिनानि बध्नन्तम् , जिह्वापरिवृत्तिशापकृतं निगीर्य रुषा विभावसुमविषह्यमदोष्मव्याजेन विसृजन्तम् ,

विशङ्कटकरटकटाहघनीभूतमदधुनीस्रोतःप्रमुक्तिभिः कालिन्दीसहस्राणीव कल्पयन्तम्, उभयपार्श्वावलम्बिवर्णकम्बलमिषादैरावतविजयोद्गमनेच्छया व्यूढपक्षमिवोपलक्ष्यमाणम्, सजलकरकानुषङ्गं प्रपागृहमिव मधुलिहाम्, परिचितकान्तारागं रङ्गमण्डपमिव वीरलक्ष्मीविलासनृत्तानाम्, उपलब्धवारिस्थितिं पर्जन्यमिव गर्जितोत्पादनस्य, प्रकटितकूर्मरूपं कृष्णम्, समुत्सारितभूभृच्चक्र पृथुम्, प्रभूतदानवारिहारिणं वृद्धश्रवसम्, प्रकाशितपद्मस्फुरणं तीक्ष्णकरम्, अधिकाननशोभिनं महाकुञ्जरम्, विष्णुमिव सुदर्शनशङ्खधारिणम्, कृत्तिवाससमिव कृतदर्पकान्तम, कौरवस्थानमिव विदुरचितशोभम्, सद्ब्राह्मणमिव अनुभूतनानाहवशस्त्रम्, धूर्तमिव स्वीकृतशुण्डापानम्, राजानमिव प्रकटितसदारक्षम्, आहवकोलाहलं नाम वारणेन्द्रम् । यः खलु गर्जेद्यदि, परिभूयेत प्रलयपर्जन्यकोटिविस्फूर्जितम् । शतकोटिसारेण दन्तयुगलेन परिणमेद्यदि, भजेत वल्मीकभङ्गिममरालयः । सुमहता शुण्डादण्डेन ताडयेद्यदि, शतधा दलेद्वसुधातलम् । मधुकरायन्ते यदि वारिदाः, तैरपि संवत्सरसहस्रं निपीयन्ते यद्यपि न शुष्यन्ति यद्दानजलानि ॥

ततः प्रलयमहोदधिरसितगभीरभेरीरवभरितहरिदाभोगम्, अम्बरतललुठितकेतुपटताडितवारिधरपटलम्, अतिनिबिडाढौ-

कितसुभटकरकलितकरवालकरालमयूखविसरधूसरितवासरम्, अविरतवल्गनचटुलवनायुजतुङ्गतुरङ्गखरखुरशिखरकुद्दालपतनभिदेलिमभूतलभूरिधारालधूलीचुलकितरोदोऽन्तरम्, उत्कटमदकरटिघटाकरशीकरासारदर्शिताकालपर्जन्यविभ्रमम्, अतिसाहसिकप्रासिकप्रसरसारनासीरम्, सागरसलिलमिव चलितपृथुलहरिपरम्पराकुलितम्, आरामवलयमिव अनेकशतप्रासगहनम्, अच्युतायोधनमिव प्रसृतपाञ्चजन्यघोषमुखरितदिगन्तरम्, शयनगतकामुकीहृदयमिव स्वपताकान्तेन समाकुलीकृतम्. नृत्तास्थानमिव सततदृश्यमानसर्वलास्यम्, अनूपस्थलमिव बहुतृणतानिबिडम्, अनवधि वलमथनदिशमभि बलमुदचलत्। प्रचलितसुभटपरिषदसिलताविसृमरकिरणविसरव्याजेन रजनिलोपेऽपि वियति जजागार तिमिरलेखा ॥

ततः कुलगिरिचक्रवालकुहरपरिक्षुभ्यदात्मीययशःक्षीरोदपूरफेनपिण्डचारुणा, त्रिभुवनपुण्यद्रुमपुष्पस्तबकेन, रिपुकमलोल्लासविरतिमृगाङ्कबिम्बेन, खड्गरुचिकलिन्दतनयाबालपुलिनमण्डलेन, सैन्यसरःपुण्डरीकेण, प्रतिभटबलजलाधिमथनसमयाहृतामृतकलशकान्तिना, गगनशुकशकुनाण्डविभ्रमेण धवलातपत्रेण द्योतयन्नम्बरतलम्, बहुनरपतिभुजशिखरारोहणावरोहणायासखेदिनीं मेदिनीं नीहारांशुशिशिरमंसस्थलमारोप्य चा-

मरानिलदानेन समाश्वासयन्, अविरलमदप्रस्रवणं विन्ध्यगिरिमिव गन्धकरिणमाहवकोलाहलमधिरूढः, परिसरविचलदतिजवनहयखुरमुखक्षुण्णक्षितितलधूलिनिकुरुम्बेण जम्बालयन्नम्बरसरिदम्भःसमुदयम् अवनिपतिः, अतिमहता बलसमुदायेन परिवृतो नगरान्निरगात् ॥

अलघुवलभरभरणविपन्नपन्नगपतिशिरांसि, चलितधरणीभृन्ति, निरन्तरमुपरि समुज्जिहानैरधः पतयालुभिश्च रजोभिरेकमहाभूतमयानीव सर्वाणि जगन्ति संजज्ञिरे । सरभसचलितरथशतपक्षक्षताक्षितितलकलितजनिः, जरठशशोर्णाधूसरा, जगदुदरम्भरिर्धूलिरुदजिहीत । मन्दाकिनीप्रवाह इव मरालीपक्षपालिभिः, चामरालीभिरराजत राजन्यलोकः । अजनिषत करिकरटकलिन्दकन्दरेभ्यो मधुकरकुलकालानि मदजलकालिन्दीसहस्राणि । सिन्धुराशिरोविकीर्णैः सिन्दूररेणुभिरकाण्ड एव बबन्धिरे बन्धूकलोहिन्यः सन्ध्यायाः संपदः । स खलु सेनानिकायः समुल्लासितपिनाकः शंकर इव चकासाञ्चकार । चलितपृथुलहरिघोषमुखरितदिगन्तरः संवर्तजलधिरिव तूर्णमूर्णुनाव दश दिशः । प्रचुरहरिकुलारावपरुषो वर्षावासर इव ततान धूलीकदम्बकोल्लासम् । परिणतकरभकण्ठरुहकपिशः ककुभां चक्रवालं परितः परितस्तरे रजःस्तोमः । स खलु धरणिपतिरिव धवलातपत्रच्छायासु संच-

चार। उत्पथप्रवृत्त इव मातङ्गयुवतिसङ्गमङ्गीचकार। मधुकर इव करिकरटमदपयसि पपात। कपिरिव कदलिकावनेषु बभ्राम। जह्नुरिव मन्दाकिनीस्रोतांसि चुलकयाञ्चकार। उन्मत्त इव वायुवशेन चस्खाल। राहुरिव रविमण्डलं जग्राह। त्रिविक्रम इव त्रीणि जगन्ति चक्राम। किंच, दाशरथिरिव आरचितसागरलङ्घनो लङ्कापुरयुवतिशृङ्गारभङ्गमकरोत्। रावण इव प्रशमितसूर्यभानुवीर्यः कैलासस्थानमाचक्राम। अगस्त्य इव आचान्तसिन्धुर्विन्ध्यगिरिमधश्चकार। अपि च, धूलिरित्वरीव संजातविविधवर्णसंयोगा, जन्मभुवमुत्सृज्य दिशि दिशि कामतो बभ्राम। ऋतुमतीव मलिनिताम्बरा स्पर्शनेन युक्ता दूरे चचार। अभिसारिकेव कृताम्बरावकुण्ठना रुचिभर्तारमभिससार। क्वचित्समक्षहृताम्बरा कृष्णा दुःशासनमनसि भीमसेनाक्रमणभयमुत्पादयामास। क्वचिदचलोद्भवा गौरी महासेनानुभावप्रकाशनकारणं दिगम्बराश्लेषणमकरोत्। क्वचित्सत्पथसंचारिणी रोहिणी उवाह गर्भे नीलाम्बरम्। संवर्तसमयसंनह्यमानपर्जन्याटोपतर्जनचतुरगर्जाडम्बरैर्न्यक्कृतदिक्करिगरिमभिः करिभिः करशीकरासारधाराभिः शमयाञ्चक्रिरे चक्रीवदङ्गरुहधूसरत्विषि रजांसि॥

एवं प्रचलति बले, सतत परिपार्श्ववर्ती, समुत्तुङ्गमातङ्गाधिरूढः, सरससारस्वतसुधास्यन्दिवदनेन्दुः, सकलशास्त्रपार-

दृष्ट्वा, नर्मालापकुशलः, स्वामिहृदयवेदी साहित्यारामसाधवो माधवः सविनयमानन्दग्रन्थिलया गिरा राजानमुवाच—
'पश्यतु महाराजः; प्रथमामिव भवति पञ्चमं भूतमुत्पतिष्णुना पांसुपटलेन। नूनमनेन रेणुकाजन्मना क्षोभितानि भयेन क्षत्रियहृदयानि। प्रत्यग्रदलितैलापरिमलमुचि मदमुचां मद-स्रोतसि प्रस्खलन्ति पदे पदे पादातानि। एषा हि राहुजिह्वेव सकलराजमण्डलग्रहलालसा, समुचिते पर्वणि प्रचलिता पृतना। इयमपि भवतः पतिप्रेम्णा बहुलरजोमण्डलनिभेन धारयतीवातपत्रं धरित्री। एतदनवधिबलमनालोच्य कतिपयाक्षौहिणीपरिमितकुरुपाण्डवसैन्यवर्णनक्रियासमभिहारेण निरर्थकमेवायासमतिमहान्तमनुबभूव भगवान्पाराशर्यः। पृथुभरतभगीरथातिरिक्तमप्रतिमं हि तेजस्त्वदीयम्। अन्य एव भवानधरितपूर्वराजन्यचक्रचरितो निसर्गसंस्कारनिर्मलहृदयः सर्वसुपर्वातिरिक्तमहिमा महाभागः। त्वदन्ये तु विपरीतवृत्तयः क्षितिलवलाभगर्वग्रन्थिलहृदयाः स्वाभाविकस्मयापस्मारविस्मारितविवेका महीपतयः। ते खलु सत्यपि राजशब्दे, न भजन्ति सतां गोष्ठीम। संजातेऽपि धनाधिपत्ये, सन्निधिकलने न फलन्ति। संनिहितेऽपि सार्वभौमभावे, सकृदपि न मुञ्चन्ति दानजलम्। अभिषेकजलाप्लवादिव सततमुपयान्ति जाड्यम्। प्रतापानलधूमोपरुद्धदृष्टय इव न दीर्घं पश्यन्ति।

शलभा इव न जानन्ति तेजस्विनां प्रभावम् । वात्यामरुत इवोद्रिक्तरजसः क्षुभ्यन्ति । रसातलविभागा इव कञ्चुकिसहस्रेण पश्यतां भयमुपजनयन्ति । गोपतित्वमासाद्यापि, वृष इति नाम न वाञ्छन्ति । चार्वाकमतानुसारिण इव न बध्नन्ति परलोकबुद्धिम् । व्याधा इव द्विजकुलदूषका रौरवपदमनुसरन्ति । तेषामविरतविधूयमानचामरानिलशमित इव न स्फुरति ज्ञानप्रदीपः । अपि च, ते अहंकाररक्षोनिवासवृक्षाः, अक्षय्यनिधानरक्षापिशाचाः, स्फुरितमणिभूषणपुञ्जमञ्जूषिकाः, विविधधनमदविकारनाटिकादर्शननृत्तशालाः; तथा च प्रकटितपृथुस्तम्भा निलया इव अनृतस्य, सततजडप्रकृतयो नदा इव क्रौर्यनक्राणाम्, स्वीकृतस्थूलकराः करिण इव मदान्धाश्च भवन्ति' इत्येवमादीनि तद्वचनानि समाकर्णयन् जगाम ॥

ततः प्रथमस्य पयोनिधेः प्रतीरभुवमनैषीत्पृथ्वी पृथिवीपतिः पृतनाम् ॥

इति श्रीगद्यकविसार्वभौमस्य वत्सकुलतिलकस्य
महाकवेरभिनवभट्टबाणस्य कृतौ
**श्रीवेमभूपालचरिते**
तृतीय उच्छ्वासः ॥

---

॥ श्रीः ॥

# चतुर्थ उच्छ्वासः ॥

अनन्तरमञ्जनगिरिकूटपटलरुचिपाटच्चरैः कुपितकलशभवहुंकारनिपतितनहुषबृहदजगरभोगभीकराकारैर्जनमेजयराजसर्पाध्वरहठाकृष्यमाणफणिकुलनिबिडपातिभिरुद्धुरध्वनिभिरुल्लोलैः कल्लोलैर्मुखरितहरिदन्तरम्, अमन्दतरमन्दरपातशकलितैरस्थिभिरिवात्मनस्तत इतस्तरद्भिरसंख्यैः शङ्खकुलैः संकुलान्तरम्, अनिलबलचलितप्रतीरकेतकपरागभूतिभिरगस्त्यमुखोच्छेषणीभूतात्मपरिशुद्धये स्नानमिवाग्नेयमाचरन्तम्, उत्तुङ्गतरङ्गझाटलुठितफणधरमण्डलमूर्धन्यमणिमहःपुञ्जरञ्जितान्तरतया हरगरप्रदानकल्मषितमात्मानमिव शोधयन्तमाशुशुक्षणिना, सलिलपानपरिणतैरम्बुधरकदम्बकैरौर्वानलधूमभ्रममुपजनयन्तम्, बलिभवनवल्मीकविवरविभ्रमैर्वरुणराजमयूरच्छत्रच्छविभिर्जलदेवतानाभिचक्रोपमेयैरावर्तमण्डलैरधिकरामणीयकम्, त्रिदिवगतपारिजातविरहशोकादिवारब्धभूरिनिश्वसनम्, वारुणीपरिचयपातकप्रशमायेव कृतगङ्गावगाहम्, सुरासुरचलितमन्दरभ्रमणसंस्तवेनेव प्रकटितबहुभ्रमम्, अनुद्धृतकल्पवृक्षवनमिव संक्रान्तैस्तटरुहतरुच्छायामण्डलैः, अन-

पह्नतामृतविलसितमिव फेनपिण्डसंततिभिः, अविरहिताप्सरोगणमिव जलदेवताभि , अनपेतकालकूटमिव नभःप्रतिबिम्बेन, श्वित्रिणमिव जलदयूथेन, रोमशमिव शैवालमञ्जरीभिः, सिरालमिव विद्रुमविटपपरिपाटीभि., पूर्तं सगरस्य, मथनकलशममृतस्य, गोष्ठीनं सुरभे, आकरं कौस्तुभस्य, वारिश्वभ्रमभ्रमुपतेः , अभ्यवहारस्थानमौर्वस्य, आयुष्यभिषजममराणाम्, अभिषेकतीर्थमादिवराहस्य, विहारकच्छं कुहनाकूर्मस्य, प्रबलरयप्रभञ्जनभञ्जनोत्क्षिप्ताभिर्मुहुर्मुहुरुड्डीयमानाभिरम्भःप्लुतिभिरसत्यपि संवर्ते सकलभुवनाप्लावनसंरम्भशङ्कामुपजनयन्तम् , अम्बरशैवालिनीमालिङ्गितुमिवाभिलषन्तम्, अन्तर्निद्राणनारायणशयनमहानागवदनसहस्रनासानिकुञ्जनिष्ठ्यूतस्थूलनिश्वासपवनान्दोलितमिव सततचलितसलिलम्, क्वचिद्गङ्गां क्वचन पतङ्गात्मजाम् अन्यत्र नर्मदाम् अपरत्र गोदावरीम् इतरत्र सरस्वतीं परत्र कवेरकन्यां च प्रतिक्षणं तरङ्गाधरदानेन प्रीणयन्तम्, अधिकतरङ्गितप्रान्तमन्तरीयमवन्याः, संनिहितानन्तशिखामणिप्रदीपं शय्यागारमसुररिपोः, अनेकसिन्धुजप्रवाहभरितं मन्दुरावसथमुच्चैःश्रवसः, बहुतिमिशकुलनिबिडवनं रक्षादुर्गं महीभृताम्, संततघनध्वनिमुखरं रङ्गमण्डपं लहरीताण्डवानाम्, पातालपरण्डघण्टापथम् , पयोधरपानीयतटाकम्, महेश्वराभरणमञ्जूषाभाजनम् , अम-

रद्रुमाङ्कुरपालिकापात्रम्, मायाशफरदायादमीनकुलगृहम्, अरहितशङ्खचक्रं कृष्णम, परिचितपृथुलहरिकुलं वाहिनीनायकम, पृथुलोमचयविधूतसलिलं महाक्रोडम, प्रकाशितसोमग्रहोदयं सवनम्, आराममिव अधिगतशठकद्रूपशोभितम्, सुरतव्यासङ्गिनमिव बहुमणितरणम्, दिवसमुखमिव उल्लसद्धिमकरम्, अरण्याभोगमिव अधिकपोतप्रचारम्, सुयोधनमिव भीमकृतोरुभङ्गम्, जयद्रथमिव स्वीकृतसिन्धुभोगम्, शकरमौलिमिव समाश्रितचन्द्रभागम्, मैनाकमिव सदानीराश्रितम्, प्रसाधितमिव ऊर्मिकावलयोद्भासिनम्, षण्मुखमिव सुरवाहिनीनायकम्, उन्मत्तमिव भ्रमोपेतम्, समरमिव समकरव्यूहम्, समुद्रमद्राक्षीत् ॥

दृष्ट्वैवमचिन्तयत्— अहो सागरस्य महिमा; अस्य खल्वपां विवर्तो देवानाममर्त्यतानिदानममृतम्। अस्य हि वालुकादृषच्छकलानि कौस्तुभचिन्तामणिप्रभृतीनि प्रत्नानि महारत्नानि। अमुष्य किल मर्यादालङ्घनं महाप्रलयः। किच यस्य खलु भोजनकबलो भुवनानि, यन्नाभिपङ्केरुहभृङ्गशिशुर्ब्रह्मा, यत्पादपांसुपरमाणुर्भूतधात्री, यद्वपुषः स्वेदजाः कृमयो गीर्वाणाः, यन्मुखनिश्वासमरुदङ्कुराः सप्त पवनाः, यच्चरणारविन्दमकरन्दबिन्दुर्मन्दाकिनी, यद्ध्यानविश्राममभूमि-

मोक्षः, यद्भुजापदानभोगावली वेदाः, यत्तेजःस्फुलिङ्गाः पतङ्ग-शशाङ्काग्नयः, स खलु सनकसनन्दनादिभिर्मुनिभिरचार्मणेन चक्षुषा भाव्यमानमहिमा कविराम्नायगिराम् अखिलभुवन-कूटस्थो गरुडकेतुरमुमधिशेत इति निगदन्ति निगमान्तगिरः' इति ॥

ततश्च दुलतरङ्गताडिततरुकुसुमधूलिपटलपुनरुक्तपुलिनभूतिनि तरुणतमालषण्डच्छायामायारजनितारकायमाण शुक्ति-पुटोदीर्णमुक्ताफलप्रकरे सौरभभृति वेलाकाननतले, निवेशयामास बलानि । तत्र राजभिर्द्वीपान्तरवर्तिभिरुपदीकृतानि यानपात्रोपनीतानि कनकमणिघुसृणकर्पूरकस्तूरिकाचमरवाल-चन्दनप्रभृतीनि धनानि पश्यन्, कतिपयान्यहानि यापयामास ॥

ततस्तस्मादुत्थाप्य सैन्यम्, वैन्यप्रतापः कलिङ्गाभिमुखः प्रतस्थे । कलिङ्गेश्वरोऽपि करिबलकम्पितमहीमण्डलेन दण्डचक्रेण परिवृतः, विधातुकामः समरम्, अमरभरणरूपं रूप-नारायणमभ्याययौ ॥

ततस्तु तयोः सुभटभुजकूटकुण्डलितकोदण्डमण्डलनिष्ठ्यूतचण्डटंकारतरङ्गितदिग्गजकर्णज्वरं समजनि जन्यं जगद-जन्यम् । कल्पान्तघनघटारटनकटवः पूरितब्रह्माण्डकुटीकुक्षयः कुलगिरिदरीप्रतिनिनादमेदस्विनः संत्रासविसररसद्धि-

ग्गजवृन्दबृंहितमेदुरा जजृम्भिरे समरसंरम्भपटहभांकाराः ।
ततश्च दुलतुरगशफमुखशकलितधरणितलपरागनिकुरुम्बपिहि-
तमिहिरकरजालम्, परस्परकलहायमानकरिबलकरमुसलघट्ट-
नस्फुलिङ्गैः संपाद्यमानरजोन्धकारखद्योतसंचारम्, सरुधि-
रकण्ठच्छेदलग्नसकरकरिमस्तकैः कबन्धैर्जन्यमानहेरम्बसह-
स्रविभ्रमम्, अविरलशोणितपूरसंगतप्रतिबिम्बैर्महावीरैर्विड-
म्ब्यमानरिपुरुधिरनदनिमग्नभृगुसुतविलासम्, उद्वेलरक्तार्ण-
वपूरतरदिभचक्रक्रियमाणमातङ्गनक्रक्रमम्, विक्रमोद्भटसुभ-
टहठताडितफलकरटितभयोच्चलितपिशितगृध्नुगृध्रमुखकृष्टाभि-
र्दन्तावलजठरसिरातन्तुसंततिभिः स्वर्जिगमिषतां शूराणां नि-
रालम्बाम्बरमार्गगामिनामातन्यमानहस्तावलम्बरज्जुसंतानमिव
हतानामनवधिकानां योधानामपर्याप्ततया स्वर्गस्य नाकान्त-
रकल्पनाविन्यस्यमानवास्तुरचनासूत्रमिव च विभाव्यमानम्,
अलघुमणिभूषणरणितानुमीयमानसान्द्ररजोन्धकारमध्यवल-
मानशूरानुरागिसुराङ्गनागणम्, समधिकरुधिरमदिरापानविव-
शपिशाचपरिषदसमीचीननृत्तानुकूलदत्तकरतालमत्तवेतालम्,
अन्योन्यविघट्टितयोधविपुलतरवारिविस्फुलिङ्गपटलासूचिताग्ने-
यास्त्रप्रयोगचमत्कारम्, खड्गविदलितकरिकुम्भमुक्तमौक्तिकप्र-
करसंपाद्यमानसुरयुवतिसुभटपरिणयनविकीर्णलाजशङ्कम्, वा-
लखिल्यस्थानमिव परिचितभास्वन्मण्डलाग्रम्, शर्वगलस्थान-

मिव संनिहितक्ष्वेलम् , वसन्तकान्तारमिव प्रसृमरनवपत्रपादपरागम् , उभयोरपि सैन्ययोरभवदखिलजगदातङ्कजननमायोधनम् ॥

मानाधिकानामायुधिकानां युधि का नाम जीविकागणना ; येन तरङ्गवेगवलितधवलातपत्रार्बुदबुद्बुदेषु प्लवमानकरिकर्णकमलिनीपर्णेषु कृत्तभटशिरःशीर्णवालशैवालविसरेषु शोणितनदीस्रोतःसमुदयेषु तरदिभशवशतपृष्ठप्रतिष्ठितपादा युयुधिरे योधाः। साटोपसुभटपरिपाटीपातितशाततरवारिदारुणदारणक्षरितवारणशोणितपारणप्रमुदितं भैरवं ररास फैरवं यूथम् । क्षणमुपरि बद्धमण्डलं भ्रमन्तश्चञ्चलगरुच्छटाश्छत्रच्छायामकुर्वत जिगमिषदसूनामसिदलितवपुषां द्विषामचिरस्रुतविस्ररुधिरगृध्नवो गृध्राः । कौन्तिकबृन्दनिरन्तरोत्तम्भितकुन्तशतप्रोतरिपुभटशिरःशीर्णकचसटाचामरपवनेन वीराणां विजघटिरे विक्रमश्रमग्रन्थयः । चस्खाल जानुद्वयसरुधिरशादपतितस्वपादसमुत्क्षेपणाय आयस्यदश्वीयम् । निरन्तरकबन्धनृत्तानिरीक्षणाय प्रतिक्षणमाक्षिण्यक्षीणदर्पाः समार्पिपन्नसृक्कणं कौणपाः। अतिजवनतुरगखुरशिखरदलितधरणितलकलितजनय., त्रिभुवनकुटीमटीकन्त चुम्बितचतुरुदन्वदम्बवो धूलयः ॥

मथनसमयमन्दरशिखरितीक्ष्णलुठनतितिक्षाकर्मठकमठपरिबृढपृष्ठनैष्ठुर्यसधर्मचर्ममण्डलचण्डास्फालनरसितघटितात -

ङ्काङ्कारविक्रमक्रमवेदिनि, क्रमेण च परस्परकरकालायसमुसलघातमूर्च्छालदन्तिनि, चर्मिवर्गनिर्मितमर्मप्रहारनिरूष्मधनुष्मति, भल्लनिर्लूनाङ्गसविषादसादिनि, जगदुदररिरंसुपांसुप्रकरे परिणमति सकलजगदातङ्ककारिणि संग्रामे, निखिलभुवनविनाशपिशुनकीनाशनिटिलतटकुटिलभीषणभ्रुकुटिभङ्गशङ्काजननकर्मठं कार्मुकमुग्ररिपुविग्रहनिग्रहव्यग्रो जग्राह नृपाग्रिमः । धन्विना तेन मौर्व्या सार्धमार्तिमनीयत शत्रुलोकः। आशुगस्पृशि तस्मिन्नसव एवाशुगा बभूवुररिभूभृताम्। पार्थिवभल्लकृत्तानि मीलद्दृंशि विजिह्मभ्रमद्भ्रूणि दष्टोष्ठभीषणानि रिपुमुखानि सविस्मयमैक्षिषत रक्षांसि ॥

ततो नरपतिः शरदमिव शरशतनिचिताम्, यक्षेश्वरलक्ष्मीमिव पुण्यजनोपलालिताम्, कौरवसभामिव शकुनिनिषेव्याम्, ग्रीष्मारण्यश्रियमिव निःशेषनिपतितपत्राम्, वैतरणीमिव शोणितपूरसंतरदुल्बणजन्तुदेहाम्, उदगयनस्थितिमिव रवेः उज्झितधनुर्व्यापाराम्, प्रलयमहीमिव रसातलपतिताम् प्रत्यर्थिपार्थिववाहिनीमकरोत् । विविधशोणितनदीशोणितमादिपुरुषमृदितमधुकैटभरुधिरानुकीर्णमिव अर्णवार्णो रराज ॥

कलिङ्गनाथोऽपि प्रहरणशतपतनत्रस्नुस्तादृशि समरभुवि नस्थास्नुर्महेन्द्रगिरिशिखरमारुरोह ॥

अत्रान्तरे सुरपदगामिशूरकदम्बकानुप्रवेशसंबाधबिम्बाविदलनभियेव पश्चिमदिशि पपात पर्यस्तरथः पतङ्गः। खड्गक्षतसुभटवपुरुच्चलितेन रुधिरपूरेणेव जरठातपेन अरज्यताशा वारुणी। मदकरिकुलकर्णतालपवनसंस्तवेनेव शशाम वासरोष्मा। क्रमेण च समरशवशतजिघत्सागतेषु रक्षःस्विव लक्ष्यमाणेषु शर्वगलकालिमसवयःसु तमःसु, अद्भुतरणदर्शनोद्भूतगगनपुलकानुकारिणि स्फुरति तारकाचक्रवाले, वीरपरिष्वङ्गव्यसनिविबुधाङ्गनास्वेदजलक्षालित इव गलति सांध्ये धाम्नि. घोरसमरदर्शनमूर्च्छयेव निमीलितपङ्कजलोचनासु दीर्घिकासु, बहुविधकबन्धनृत्तदर्शनोन्नमितयामिनीवदनात्विषि समुन्मिषति शर्वरीसहाये, वेमभूपोऽपि सग्रामपरिसरभुवि सैन्यं निवेश्य. प्रोत्तुङ्गपटमण्डपिकामध्यमध्यासीनः सुखमुवास॥

अथ जीवितेन सह विपक्षक्षितिभृतामक्षीयत क्षणदा। कलिङ्गपतेर्निःशेषनिर्वाणस्य प्रतापाग्नेर्धूम इव क्वापि नादृश्यत तिमिरपटलम्। यशसा सह तदीयेन संकुचति स्म तारकोन्मेषः। शौर्येण सह कुण्ठीबभूव कुमुदलक्ष्मीः। उदिते च भगवति किरणमालिनि, कलिङ्गोपहृतानामञ्जनगिरिकूटव्रीडाकृतां मदमलिनकपोलपट्टानां मदकारिणामनेकशतानि संगृह्य, दर्शितसरणिरुत्कलैराससाद संपदुत्तुङ्गानङ्गान्। अन-

न्तरमवनिपतिरङ्गान्विजित्य, वङ्गभङ्गालान गङ्गासगतसागर-जलदुर्गदृप्तहृदयान नौसाधनान्विजेतुम्, प्रवहणैः पृतनां प्राहिणोत्। पवनरंहसः प्रवहणमण्डलाः सपक्षा इव धरणिधरा. सागरसलिलमानशिरे। अधिरूढपोतमण्डलैः खण्डयितुकामैररातिभिरपि प्रतिजगृहे प्रवहणचारिणी पार्थिवध्वजिनी ॥

अथ तयोः सैन्ययोरितरेतरनिस्त्रिंशनिघर्षणविसृमर-विस्फुलिङ्गनिकरासूत्रितानेकबाडबस्फुरणशङ्कम्, उच्चलित-लहरीविसृत्वरशिशिरशीकरविनीयमानशस्त्रक्षतवीरमूर्च्छाधि-गमम्, सुभटहठाकृष्टिनिष्क्रूतधनुष्टंकारपिहितविशङ्कटतरङ्ग-कूटकोलाहलम्, निरन्तरसुभटविमुच्यमानतप्तनाराचपरम्प-रापतनसागरजलजृम्भमाणधूमकदम्बकान्धकारैर्बध्यमानसुरा-पगासागररतिसमुचितरात्रिविन्यासम्, अविरलरुधिराप्लुव-संकुलजरठतिमिङ्गिलस्मर्यमाणशार्ङ्गधरमधुकैटभसमरप्रक्रिय-म्, वरवरणकुतुकसमागतवलरिपुपुरयुवतिदर्शनजलमानुषी-वेद्यमानपूर्वसख्यम्, चटुलतिमिकुलमुखाकृष्टशवशतसाहस्रम्, सिरावल्लिवितातिमेदुरितविद्रुमलताविभ्रमम्, निहतबहुसुभटदेहिदेहसमसमयाधिगतसुरपदपातालपरिगतपराक्र-मप्रकर्षम्, पावनभागीरथीसलिलपतितहतसुभटजायमान-सगरसुतसभासंमर्दम्, शरवर्षपरुषताडितोत्थितसपक्षक्षिति-धरगरुदनिलपाटितकेतनपटम्, आयुधहतविविधयोधवपुः-

क्षतजपातपूतिगन्धिवारिपानविमुखीभवदम्बुमानुषकदम्बकम् , तप्तशरशतताडितजलधिचिन्त्यमानकुपितरघुपतिविमुक्ताग्नेया-स्त्रप्रयोगसंरम्भम् , अविरतप्रहतपटहपटुनिनददरिद्रनाराय-णानिद्रामुद्रम् , अश्रान्तविसृज्यमानसकटुघोषयन्त्राशनिबृन्द-चण्डपतनदह्यमानाखण्डपोतमण्डलम् , अनवरतक्षिप्यमाणय-न्त्रदृषदास्फालनफलत्फलकम् , उग्रमायोधनं बभूव ॥

प्रवहणचारिणा पराक्रमसहभुवा पार्थिवानीकेन भङ्ग-मनीयत वङ्गभङ्गालवाहिनी। ततः सेनाधिपाः पराजयलज्जाक-ज्जालितमुखान् वङ्गभङ्गालपतीन जीवग्राहं गृहीत्वा, प्रतीरव-र्तिनः पार्थिवेन्द्रस्य पादयो पातयामासुः । प्रकृतिदयालुः पार्थिवोऽपिताननुकम्प्य, यथापुरं स्वपदेषु निवेशयामास । अन्यांश्च महीभृतः पौरस्त्यानेवमाक्रामन्. तत्रैव गङ्गासाग-रसंगमपुण्यतले प्रदेशे महान्ति दानानि वितरन्विशिष्टविद्या-चारेभ्यो द्विजेभ्यः, कतिपयानि दिनानि तत्रैव उवास ॥

ततः क्रमेण गाढहिमकवोष्णपूष्णि, घनमकरन्दपङ्कसुर-भिलवङ्कप्रसवे, प्रियङ्गुमधुसपीतिप्रीतभृङ्गमागधमङ्गलसंगीतम-धुरवनसीम्नि, सरसकुसुमकन्दलसुन्दरकुन्दलताशिरासि, प्र-णयगुरुविलासिनीबिम्बाधरचुम्बनाभियोगाविरतविलासिनि, न-वकिसलयलावण्यललितलवलीलतालासिनि, विस्मृमरलोध्र-

जोवृष्टिनष्टदृष्टिपथे, प्रोषितजीवापहारिणि, दुर्विषहतुषारवर्षदूषितरोदसि, हसन्तिकाधूपनिर्भरगर्भवेश्मनि, जनतादन्तवीणावादनमहावैणिके, कुङ्कुमाङ्गरागहारिहरिणलोचनायौवनकोष्णकुचकलशाश्लेषशरणतरुणजने, मणिरशनाविरहवाचंयमानिनीजघने, मसृणनक्षत्रमहसि, मन्दचन्द्रप्रसादे, निबिडनिबद्धहस्तस्वस्तिकमुद्रामुकुलितनरगात्रकथितशैत्योपद्रवे, निर्विशङ्कसमालिङ्ग्यमानहुतभुजि, दीर्घरतिप्रबन्धवर्धमानमकरध्वजभुजौजसि, उत्तरपवमानवैजनने, परिणतगर्भनिर्भिन्नपेशलशुक्तिपेशीमुक्तमुक्ताफलप्रकरशर्करिलसागररोधसि, कलितकालेयकालेपनकलङ्कितकामिनीकपोलमूले, गुम्भितकुसुम्भकुसुमसंपदि, तरुनिकरनिर्यासनिर्याणनिदाने, माञ्जिष्ठगुच्छोपरिच्छादितशय्यासनाथभवने, विविधायुधाश्रमयोग्यायोग्ये, संचार्यमाणराजवाहनाजानेयवाजिराजिराजमानबाह्यालीभुवि, निष्पन्ननिष्पावफले, पाकविदीर्णपुण्ड्रेक्षुप्रकाण्डपरुषि, पक्त्रिमानणक्गोधूमचणके वनवराहमेदस्करे, वारिजसौभाग्यतस्करे, क्षपायुष्यभिषजि, करवीरकुसुमखण्डिनि, रङ्कुमदासङ्गमेदुरामोदसुभगमेदिनीनाथवपुषि, अदरिद्रहारिद्रपलाशहरिति, मसृणितहारीतभासि, प्रत्यग्रकौशेयप्रावारप्रवरप्रावृतधनिकप्रतीके, स्फारशृङ्गिबेरसमुदये, कर्णकटुकौशिकाक्रोशनिःसहनिशांथबोधे, दिवानिशं दीव्यज्जडिम्नि, देवतादिनारम्भे जृम्भमाणे

शिशिरसमये, वीरगोष्ठीमधितस्थुषो विश्वंभरापतेर्नातिदूरवर्ती मागधः कश्चिदिमामार्यामुच्चैरगायत् ॥

'भास्वन्ति कान्तिनिन्दितकुञ्जरमूर्धन्यमौक्तिकात्विंषि ।
समयेऽत्र ताम्रपर्ण्यां मुक्तारत्नानि शुक्तयः सुवते ॥'

तं श्रुत्वा धरणिपालो यशांसीव भूभृतां दाक्षिणात्यानां ताम्रपर्णीमौक्तिकान्यादातुमाचकाङ्क्ष ॥

ततः सैन्येन सह महता षाड्गुण्यविचक्षणो दक्षिणाशामभिप्रतस्थे । तालासवपानमुदितदाशयुवतिकुचकलशकाठिन्यवेदिकुरण्डकद्रुमेण, तरङ्गानिलताडनोद्धूतपूगकुहलीधूलिजालजायमानसैनिकायत्नपटवासेन, फलभरनिबिडनालिकेरकलापेन, तरुणतमालषण्डच्छायावासरक्रियमाणकचाकचिकलहेन, कैवर्तमिथुननिधुवनकेलिसौधायमानसविधपुलिनमण्डलेन, पाकभिदुरकदलीफलरससिक्तकरतललेहनाकुलकपिकुलेन सागरतटाध्वना, लावण्यनिबिडान् द्रविडानाससाद ॥

तत्र सकलभुवनप्रशस्तसौभाग्याम्, सौन्दर्यकोशगृहमिव धरण्याः, सान्द्रयता गिरिशशिरश्चन्द्रचन्द्रिकामूर्ध्वविसारिणा स्फटिकसालप्रभावितानेन क्षीरार्णवमिव गगनतले कल्पयन्तीम् , आकाशमूर्तेः शूलपाणेः कैलासवासमिव घटयन्तीम् , अद्यापि दनुजपुरभसितसितामिव दिवमुत्पादयन्तीम् , आस-

त्ररुद्राट्टहासमहोज्जृम्भणमिव शङ्कयन्तीम्. अम्बरफणिनो नि-
र्मोकमिव जनयन्तीम्, कम्पासरिदम्भःप्रतिबिम्बिताभोगतया
भोगवतीमिव स्वसेवागतां दर्शयन्तीम्, ताण्डवरभसपतितधू-
र्जटिजटाजूटसुरसरिदम्बुपूरपूरितैरिव स्वादुतोयैः सरोभिरुप-
शोभिताम्, प्रसृमरया पद्मरागतोरणनिकुरुम्बत्विषा संसार-
दावदहनाय पावकमिव प्रकाशयन्तीम्, इन्द्रनीलभवनचन्द्र-
शालारोचिरुद्गमैर्मुक्त्यङ्गनाभिसरणनिशामिव निर्मान्तीम्,
स्वप्रभवहरशिरश्चन्द्रदर्शनायातलवणार्णवभ्रममापादयन्तीम्,
शंकरसंव्यानगजेन्द्रकृत्तिमिव द्वितीयामाविर्भावयन्तीम्, वेगव-
तीतरङ्गधनुर्विमुक्तैः सलिलपृषत्पृषत्कैर्विद्धानि भुवि लुठन्ति पा-
तकमण्डलानीव पवनतरलानि परिसरारामतरुच्छायामण्डला-
नि दर्शयन्तीम्, अतिबहलद्युतिषु मुक्तामयसौधेषु संचरन्तीभिः
पुरयुवतीभिः क्षीरोदान्तरावित्रलमानाप्सरःश्रियमाकर्षयन्तीम्,
महानीलमणिस्थलीगतैः कनकमयैः केलिगिरिभिर्वासवत्रासेन
वारिराशिनिवेशितैरर्भकैरिव सुमेरोरलंकृताम्, विततवितान-
होमधूमपालिकाकालिकाभिर्दुष्कर्मघर्मशान्तिं रचयन्तीम्, अ-
निलविस्तार्यमाणैरगरुधूपमण्डलैः कलिबलयुद्धकर्मणे चर्माणीव
घटयन्तीम्, आश्चर्यजननीभिः प्रासादलिखितचित्रपरंपराभिः
करिगिरिनिलयस्य विष्णोर्विश्वरूपलीलामिव विवृण्वतीम्,
पवनचलितैः केतनपटैः सुरपुरीसौभाग्यमिव धून्वतीम्,

लालाटिकीं जनानां द्रुहिणदुर्लिपिपद्धतिमिव प्रमार्जयन्तीम्, नवजलधरनादगम्भीरैर्दुन्दुभिध्वनिभिरैश्वर्यमयूरमिव नर्तयन्तीम्, काञ्चनमयीभिर्देवालयपरम्पराभिः कांचन शोभां विवृण्वतीम्, काञ्चीं नाम पुरीमगात् ॥

यत्र करिगिरिशिरसि स्थितं कमलनयनकालमेघमालोक्य किल विचलितशिखण्डार्धचन्द्रमेकाम्रमूलनिलयो नृत्यति नीलकण्ठः। यत्र दर्वीहस्तया देव्या कामाक्ष्या दीयमानान्नकाङ्क्षिण्य इव सर्वा अपि देवताः संनिदधते। यत्र मुक्तिवधूपरिणयनमङ्गलपटहरव इव कम्पानदीकल्लोलकलकलः श्रूयते। यत्र च समुन्नतमहानीलमणिमयगोपुरकोटिघर्षणरूढमिन्दुवपुषि कार्ष्ण्यं कलङ्क इति कथयन्त्यतत्त्वविदः। यत्र च वामदृशां वदनलावण्यपराजयतापनिर्दग्धमिवेन्दोर्हृदयमाविलच्छायमालक्ष्यते; सकलङ्कमिति मृषा व्यपदेशः। मुखकान्तिकदर्थितैः कमलैरश्रुबिन्दव एव मुच्यन्ते; मकरन्दस्यन्दा इति चिन्ताव्यामोहः। सविलासगतिचातुरीदर्शनलज्जामज्जनमाचरति सलिलेषु हंसकुलम्; प्रकृतिरिति वितथमाभाषणम्। कुचकलशकान्तिचोराणि कुञ्जरकुम्भस्थलानि सृणिमुखताडनेन दण्ड्यन्ते; मदापनयनार्थमिति समर्थनमनर्थकम्। कमनीयकण्ठकान्तिलब्धशोकानि कम्बूनि अम्बुनिधिसलिलेष्वघमर्षणमाचरन्ति; स्वाभाविकी वृत्तिरिति चित्तभ्रमः ॥

तत्र च गम्भीरगलनिलयकरालकालकूटकान्तिसंतमसज्ज्यो-
तिरिङ्गणायमानकङ्कणाशीविषविषानलस्फुलिङ्गरिङ्गणदुष्प्रेक्षम,
विस्फूर्जत्खट्वाङ्गपाणिम, विकटजटाजूटकुहरविहरमाणसिद्ध-
सरिदुद्धतलहरिकूटपवनपूरितापीडविधिशिरःकरोटिकन्दराघु-
मघुमाघोषप्रेषिताकल्पकद्रूसुतनिद्राग्रन्थिम्. दीप्तजटापिन-
द्धदर्वीकरपरिबृढफणामणिमहःस्तोमचुम्बितापरभागतया ज्यो-
तिःस्तम्भादाविर्भूतमिव दृश्यमानम्, ताण्डवाभिनयोत्तानि-
तमुपरिलक्ष्यमाणगगनं भूयोऽपि गृहीतकालकूटमिव करतल-
मुद्वहन्तम्, उग्रगलगरलमूर्छितैरिव ध्यानस्तिमितात्मभिरग्रतः
स्थितैर्महायोगिभिरन्तर्दृशा विभाव्यमानमहिमानम्, उत्तरीय-
गजाजिनच्छायया शेखरशशाङ्ककलत्रं रात्रिमिव कल्पयन्तम्,
धूमोद्गममिव पाणितलहिरण्यरेतसो जनयन्तम्, अङ्गदखचि-
तमरतकमणिमरीचिभिः करतलवासिनो हरिणस्य नवतृणरा-
शिधियमुपजनयन्तम्, दक्षिणश्रवणकुण्डलीभूतस्य शेषस्य अं-
सापरभागविसर्पिभिरंशुभिरद्यापि नारायणबाणवासाय क्षीरो-
दतूणीरमिव दधानम्, सजलजलधरध्वानधीरेण डमरुडात्कृ-
तेन षाण्मातुरशिखण्डिनस्ताण्डवलीलामुपदिशन्तम्, अतिर-
भसनृत्तभ्रमवशविपन्नाभरणपन्नगमुखसंपन्नविषवर्षक्लिन्नकरिकृ-
त्तिपरिधानम्, चरणमणिभूषणप्रतिबिम्बिताम्बरतलतया घोर-
विषवितरणमहापराधक्षान्तये पादपतितं पयोधिमिवानुमापय-

न्तम्, दृढसंसक्तमौक्तिकप्रकरदन्तुरधारेण त्रिशूलेन वारणासुरमस्तकदारणमनक्षरमाचक्षाणम्, कालकूटच्छायामायारजनितारकायमाणेन पूष्णो दन्तपङ्क्तिरचितेन हारेण अलंकृतकण्ठम्, नृत्तोक्षिप्तस्याङ्घ्रितलस्य किसलयलोहिनीभिः किरणराजिभिर्गगनार्णवस्य विद्रुमलतावितानमिव विदधानम्, अन्यस्य चरणस्याङ्गुलिद्युतिभिः कठिनशमनतनुताडनोद्भिन्नतलतया क्षोणितधारा इव निःसरन्तीः सूचयन्तम्, कोपकुटिलनिटालतटघटितभीषणभ्रुकुटीभङ्गभङ्गुरमुखभयंकरभृङ्गिहुंकृतिभयोत्सारितसुरसंमर्दम्, अखिलजगदुत्पत्तिगुप्तिविपत्तिकारिणम्, अविषह्यहालाहलतापविनोदनार्थमिव शीतलमेकाम्रच्छायमधिवसन्तम्, रक्षानायक इति प्रथितापरनामधेयमेकाम्रनाथं प्रणनाम ॥

प्रणम्योत्थितस्य तस्य चिन्ता बभूव—'अयं हि विलम्ब्य क्षणमादित यदि कालकूटम, कीदृग्भविष्यति सपितामहवासवं भुवनम्। वारिधिमथनसमये क्षणमस्य करकमलोदरे मधुकरलीलामवहत हालाहलः। अस्य खलु भक्तजनजन्माटवीदहनदावानलो जगति जयति महानालयः' इति ॥

अथ तमनुज्ञाप्य भगवन्तम्, निर्गत्य, नभश्चरतेजोनिकररिङ्खणकरतुङ्गमणिगोपुरशृङ्गाग्रविहृतिव्यग्रसमग्रकिन्नरकुलम्, उन्नतजाम्बूनदसालपुञ्जं कुञ्जरगिरिमाससाद ॥

तत्र स पुनः, अखिलभुवनकुक्षिम्भरिम्, उपनिषदुपवनतमालम, इन्द्रनीलशैलच्छायादायादरुचिम, मन्दरगिरिकूटकषणमसृणमणिकेयूरमकरिकाकोटिभिः शार्ङ्गज्याकिणकलङ्कितप्रकोष्ठैरनेकरत्नाभरणभूषितैः पारिजातविटपानुकारिभिश्चतुर्भिर्बाहुदण्डैरुपशोभितम, द्रुहिणकुलालस्य निखिलब्रह्माण्डभाण्डोपादानमृत्तिकोत्क्षेपगर्तरुचा नाभिरन्ध्रेण कामपि कान्तिं कन्दलयन्तम्, प्रसरता पाञ्चजन्यमहःपटलेन वक्षःस्थलस्थलक्ष्मीदर्शनायातक्षीरार्णवशङ्कामिव जनयन्तम्, अङ्कलग्नं शयनफणिराजनिर्मोकमिव दर्शयन्तम्, वामनयनेन्दुनिर्गतं चन्द्रिकाराशिमनुमापयन्तम्, क्षौमनिचोलमिव शार्ङ्गस्य घटयन्तम्, कायकान्तिकालिन्द्यां फेनबृन्दमिव च विभावयन्तम्, उदरगतजगदजरणार्थमिव सागरशयनसखीं योगनिद्रामप्यपास्य तिष्ठन्तम, प्रसादस्निग्धयोर्दुग्धधवलयोस्त्विषा लोचनयोः क्षीरोदसहस्राणीव विसृजन्तम्, अन्तःस्थितभुवनप्रबोधाय पूषणमिवोरसा कौस्तुभं रत्नमुद्वहन्तम्, द्रुततपनीयद्रवपिशङ्गेन वाससा वलाहकमिव वैद्युतेन महसा दीप्यमानम्, आयोधनविजयिनमिव गृहीताराातिचक्रवाहम्, विन्ध्यमिव विधृतवनमालम्, हिमांशुमिव पृथुलगदाभासितम्, विभाकरमिव बहुधामोपशोभितम्, विरक्तमिव नवसुदर्शनरुचिम्, वरदराजाभिधानं हरिमनंसीत् ॥

प्रणम्योत्थाय, 'सर्वभुवनसनाभिनाभये, छन्दःसंदर्भकवये, प्रकृतिविकृतिबाह्याय, प्रत्यग्दृशामबाह्याय, निर्मलज्ञाननेदीयसे, निर्वाणपण्यविपणये, मनसोऽप्यविषयाय, वाचामप्यगोचराय, सुषुम्नापथपथिकाय, सकलजगदात्मंभरये नमो हरये' इति तुष्टाव विष्टरश्रवसम् ॥

ततः काञ्चीपुरान्निर्गत्य, बद्धद्विरदसेतुरुत्तीर्य हस्तिपतिद्वयसीं सह्यजाम्, असह्यप्रतापः पाण्ड्याभिमुखः प्रतस्थे । पाण्ड्याः सर्वेऽपि संभूय बलिना सह तेन तेनुरवनिभुजा चण्डयोधमण्डलाग्रखण्डितसुभटवपुःक्षरितकवोष्णक्षतजपानविरसरसदशिवशिवाक्रन्दनमाक्रन्दनम् । ततः केचित् प्रथनपलायिताः, परिसरमहारण्येषु शाततरदार्षदशकलकोटिपाटितपार्ष्णिक्षरल्लोहितोक्षितक्षितयः, संततविषमाध्वधावनजातपादश्वयथवः, स्फीतफलभारावनमितबदरीशाखाञ्चलकण्टकमुखोल्लिख्यमानवक्षसः, विविधगिरिदरीजृम्भितझरीघनपयःपायिनः, खरखदिरस्थाणुशिखाघातव्रणितजानवः, कन्दमूलजिघृक्षया कठिनधनुरटनिखन्यमानवन्याक्षितयः, मृगतृष्णिकाचक्रनिष्क्रमदुग्रमरुमरुदुपद्रवद्रवत्तनवः, वनमहीलङ्घनघनश्रमच्छेदव्यजनीकृतशाकतरुतरुणपल्लवाः, शुष्यज्जिह्वासारस्यकरणजग्धमुग्धामलकफलाः प्रचेरुः । इतरे तु महीभृतां पत्युर्मणिकटकभासुरं पादमासाद्य, पयोमुच इव पाण्ड्या बभासिरे ॥

बलिभिर्यैः पुलस्त्यकुलकलशार्णवकालकूटः, कैकसीविषलताफलप्रसवः, रविकरतापराजयक्ष्मा, कैलासशैलकन्तुकविहारी, सवनवनद्रुमपरशुः, अमर्त्यासुरकालमृत्युः, आशाकरिकूटपाकलः, स्वःसौधकूटपाटनपविः, वैश्रवणग्लानिविश्राणनवदान्यो राक्षसेश्वरो रावणोऽपि स्वपुरविमर्दशङ्की संधाय त्रिष्टपत्रयविजययात्रामकरोत् । ये खलु पाणितलसरोषास्फालनविभिन्नवलभिन्मकुटोपलाः, कारानियमितघननिकुरुम्बाः, पादतलविन्यासपार्ष्णिदघ्नीभूतपयोधिपाथसः, स्वकेतनमीनयुग्माङ्कितरुक्मगिरिकटकाः, भ्रूलतादिष्टकार्यकिङ्करीभूतवेतालाः । तेऽपि च पाण्ड्याः पाण्ड्यराजगजकेसरिणोऽस्य पादारविन्दममलमुक्ताफलकुसुमैरर्चयामासुः ॥

ततः फलेग्रहिक्रमुकेण, जाम्बवचुम्बितफलजरठजम्बूवनेन, प्रतिशयितरघुपतिदर्भशयनदर्शितवरुणदुरहंकारग्रन्थिना, तरुणतमालसालशाखाधिरूढजलदेवतागीयमानरघूद्वहलङ्कालुण्ठनगाथासहस्रेण, दुर्जयदशग्रीवविजययशोराशिभिरिव दाशरथेर्दाशयुवतिनिधुवनकेलीसौधैः सैकतमण्डलैः स्थपुटितसंनिवेशेन, सुग्रीवसैन्यकापेयभग्नजरठखर्जूरनालिकेरवनेन, प्रकुपितभरताग्रजबाणदहनदह्यमानजलधिवेदनावेदिजरज्जलमानुषसेव्यमानातपेन दक्षिणार्णवरोधसा सेतुमाससाद । सागरशैवा-

लकवलग्रहणप्रसारितमिव हस्तं मलयमतङ्गजस्य, राहुमिव रावणयशश्चन्द्रमसः, परण्डमिव प्रथमपश्चिमसागरद्वीपद्विपयोः, सलिलपानपरिणतपाथोधरपङ्क्तिभ्रममुपजनयन्तं सेतुमालोक्य तम्, बहुमन्यत चरितं रामचन्द्रस्य ॥

अनन्तरमुच्चलितकम्बुवलयैरूर्मिहस्तैः सिन्धुराजसेवाचामराणीव फेनपटलानि विधून्वतीम्, पयोधिमहीपालप्राधान्यचिह्नैः सितातपत्रैरिव फेनधवलैरावर्तचक्रैरलंकृताम्, अविरतकूलंकषैरम्बुपूरैः पत्युरौर्वानलपानक्षयमपवाहयन्तीम्, बहुलविसर्पिणा फेनजालेन जह्नुमुखकुहरनिह्नुतस्रोतसं त्रिस्रोतसं हालामदमुदितहलधरहलकर्षणक्षोभकलुषां कालिन्दीं छन्नसलिलां सरस्वतीम् अर्जुनकरसहस्रनिरुद्धरयां रेवां चापहसन्तीम्, सलिलपवनताडनविधूतैस्तटकेतकीधूलिजालकैः सागरवशीकरणचूर्णमिव विकिरन्तीम्, आसन्नमलयगिरिवासिना कलशभवेन प्रतिदिनमाचमनशते क्रियमाणेऽप्यशुष्यन्तमम्भःसंभारमुद्वहन्तीम्, ऊर्मिविवलितैरनुक्षणशुक्तिमुखोदीर्णैर्मुक्ताफलैरमरहृतसर्वस्वमात्मवल्लभं पुनरपि संपदेव योजयन्तीम्, पातालफणिकुलनिर्मोकपट्टिकानुकारीणि जलमानुषबालिकाकुचकलशशाटिकायमानानि डिण्डीरजालानि दधतीम्, अम्भःप्रतिबिम्बितानि परिसरतमालवीथिकाछायाच्छ-

ल्लानि तपनकरावस्कन्दनभयशरणागतानि शार्वराणि तिमिराणीव दधानाम्, आलम्बिबालपल्लवैः स्वादुतरपाथःपानप्रलम्बिजिह्वैरिव पादपैः परिवृतप्रतीराम्, सलिलरयसमुत्खातान् तांस्तानारामपादपानपहृतसुरपादपस्य वारिधेरन्तःस्थापनार्थमिवाकर्षन्तीम्, प्रोत्फुल्लपुण्डरीकनयनैः पाण्ड्यमहीपसंपदमिव पश्यन्तीम्, सस्वेदबिन्दुमिव चटुलपाठीनाविवर्तनजनुषा बुद्बुदनिकुरुम्बेण, सरोमाञ्चामिव वीचिपवनविकीर्णेन कमलकिञ्जल्कविसरेण, सभ्रूभङ्गामिव तरङ्गैः, सलोचनशतामिव सलिलावगाढवनगजमदस्यन्दचन्द्रकैः, सभूषणरवामिव सारसरसितैः, कचित्सजम्बूसरित्प्रवाहामिव भूपस्त्रीकुचतटहरिद्राद्रवैः, कचित्सगङ्गास्रोतसमिव मलयवनशबरराजतरुणीस्तनकलशचन्दनधूलिभिः, कचित्सशोणपूरामिव पाण्ड्यराजजयकुञ्जरकुम्भसिन्दुररेणुभिः, कचित्ससरस्वतीश्रियमिव बहुलकुमुदवनपांसुसिकताभिः, शरदर्कमरीचिमिव अतिरोहितप्रचाराम्, कौरवसभामिव कर्णानुकूलचपलशकुनिकलकलाम्, प्रथममहिषीं सागरस्य ताम्रपर्णीमाससाद ॥

यस्यां खलु सलिलचारिणां कीटानामस्थ्यन्तराणि पार्थिवमकुटकोटिलालितानि मुक्ताफलानि । यस्याः स्वादुतरेषु तिष्ठत्सु तोयेषु, अमृताख्येन वारिधिश्लेष्मणा विडम्ब्यते विबु-

धवर्गः। यस्याः पुण्यतरेषु सलिलेषु स्थितानि निरुपमपाण्ड्याङ्गनानयनकान्तिलिप्सया जपन्ति नूनमिन्दिन्दिरवृन्दविरुतिमिषेण मन्त्रमिव इन्दीवराणि ॥

तदनु दिने दिने ताम्रपर्णीपयसि कालायसशृङ्खलावतीर्णकैवर्तककुलोद्धृतशङ्खशुक्तिसमुत्पन्नानां पराक्रमपादपप्रसवायमानानां दक्षिणादिग्वधूकरग्रहणमङ्गललाजश्रियां मौक्तिकानां राशीनाददानस्तत्रैव कंचित्कालमुवास ॥

तदनु वेमभूमिपतिः, मुक्ताफलप्रकरशर्करिलरोधसं तामुत्तीर्य, धनमदगर्वितोर्वीभृतः केरलान जगृहे। तत्र सकलभुवनरक्षाधुरन्धरं धनुरादाय, समरभुवि दुर्मदकेरलकर्शनकल्यं शितशल्यं शिलीमुखमवर्षत्। प्रचण्डसमरभग्नानां केरलभूभृतामामिषविचयनारिङ्खत्खिङ्खिरमुखनिर्गलदुल्काभवैर्घर्मनिर्मितकोरकस्फुटनविभ्रमरगुञ्जाफललिङ्गैः स्फुलिङ्गैर्लुण्ठितरथ्यावर्गाणि दुर्गाणि चकार शून्यानि। ततः कमलमधुपानमत्तकलहंसचरणमुद्राङ्कितपुलिनां मुरचीमतिलङ्घ्य, मलयाभिमुखः प्रतस्थे ॥

अनन्तरमुत्तुङ्गशृङ्गलङ्घितब्रह्माण्डम्, निरन्तरतटनिलीनानि नीरदनिकुरुम्बाणि वासवव्रणक्षतकृते घृततूलपट्टविभ्रमाणि बिभ्राणम्, स्फटिकतटप्रभामिषेण पवनवलभग्नशिखरममरालयम अमृतमथनभ्रमिभिदुरपाषाणवृन्दं मन्दरम

अगस्त्यमुनिकोपवन्ध्योन्नतिं विन्ध्यं दशलपनभुजविलासोत्था-
पितं कैलासमपि हसन्तम्, निशि निशि समुन्नतशिखरशे-
खरश्रियं बिभ्राणया मालतीमालिकयेव छायापथरेखया चका-
सतम्, मन्दपवनतरलतटचन्दनपल्लवैरौर्वानलतापमिव शमय-
न्तमम्बुनिधे:, पादनिहितदृढतरसेतुशृङ्खलाव्यथयेव गुहावि-
सारिपवननिभेन निश्वसन्तम्, क्वचिदमरै: क्वचन गुह्यकै:
क्वापि दैत्यैरेकत्र सिद्धैरितरत्र विद्याधरैरन्यत्र चारणैरपरत्र
गन्धर्वै: परत्र किम्पुरुषैश्च प्रतिदिनमध्यास्यमानम्, अभ्य-
र्णजलधिजलदृश्यमानप्रतिमतया अगस्त्यमुनिप्रसादनार्थमाग-
तेनाध:स्थितेन तदाश्रयभूतत्वादुपास्यमानमिव विन्ध्याद्रि-
णा, पटीरतरुशाखावलम्बिनां फणिनां विषवृष्टिभिरानन-
च्युताभिर्भूयोऽपि सकालकूटमिव सागरं कलयन्तम्, आ-
खण्डलवज्रव्रणवेदनाबाष्पमिव निर्झरजलं विमुञ्चन्तम्,
ऊर्ध्वाण्डभेदिभिर्दिगन्तरव्यापिभि: शृङ्गाग्रैर्नि:शेषविलुप्तगग-
नतया महानीलशिलाप्रभाभि: विसर्पिणीभिरम्बरमपरमिव नि-
र्मान्तम्, कूटकोटिघट्टनपतितैस्तारकानिकुरुम्बैरिव सिहदलि-
तदन्तावलशिरश्च्युतैर्मुक्ताफलैर्दन्तुरकटकोत्सङ्गम्, अतिग-
भीरैर्निर्झरध्वनिभि: स्तुवन्तमिव सागरशायिनं नारायणम्,
हिमवत: शैलाधिराजशब्दे विरचितरोषाट्टहासमिव सागरप्र-
तिध्वनिभि:, जृम्भिकाव्यात्तमुखमिव गुहाभि:, ससिराजाल-

कमिव चन्दनलम्बिभिः पन्नगैः, सकुङ्कुमस्थासकमिव धातुभिः, आवर्तपात्रस्फुरितैः प्रवालाङ्कुरप्रदीपैर्निवर्त्यमाननीराजनमङ्गलमिव नीरनिधिना, शर्वरीमुखमिव संकोचितपुष्करविकासम्, राशिगणमिव गुरुभृगुभूषितम्, पद्मनाभमिव पादोद्भूतानन्तसिन्धुम, आश्चर्यनिलयमाससाद मलयम् ॥

आसाद्य च विस्रमरझरीमुषिततृषितग्लानिषु मधुमदखिन्नकिन्नरमिथुनमधुरगीतिश्रवणसतृष्णकृष्णहरिणासु, तरुणकिसलयसारगन्धसारासु, सरसमरिचलतापरिचिततक्कोलासु मलयगिरेरुपत्यकासु निवेशयायास नृपतिरध्वश्रमवतीं सान्द्ररजोधूसरध्वजां ध्वजिनीम् । चन्दनवनदेवतावन्द्यमानरघुपतिचरणमुद्राङ्किताशिले, वरुणपुराङ्गनाविलूनकर्णपूरोचितकङ्केलिकिसलये, शिवपूजाव्यग्रकलशभवकरापचिततरुणतरुप्रसूने, लोपामुद्रावर्जितमणिकुम्भवारिपूरितलतालवालवलये मलयगिरिपरिसरमहीतले वासराणि कतिचिदवात्सीत् ॥

ततो बलभरजर्जरितमहीमण्डलः, खण्डितहोसलमल्लभटकलहसाहसः, प्रतीचीं दिशमुपययौ ॥

तत्र प्रत्यर्थिपर्वतस्फूर्जथुर्नृपतिर्गूर्जरान्प्रति पृतनां पृथुनाभागनिभश्चकर्ष । ततः कृतान्तचोदिता गूर्जराः, भृशमूर्जस्विना पार्थिवेन सह प्रभविष्णुना विष्णुनेव दानवा योद्धुम् उद-

मनायन्त । पवनतरलपताकापटभासिनश्चलितमणिकिङ्किणी-
निकरमुखरान शातकुम्भरथाङ्गान् शताङ्गानधिरुह्य शङ्खरव-
पूरितदिगन्तराश्चापशक्तिप्रमुखविविधायुधपाणयो गूर्जराः स-
मराय संनद्धाः समायासिषुः । चक्रिरे च शक्रतेजसा तेन
सह असह्यसाहससंपदो, चलितरथनेमिनिष्पिष्टधरणिपृष्ठम्,
सत्त्वोद्भटसुभटहठकृष्टनिष्ठुरकोदण्डमण्डलचण्डनिर्घोषभिदुर-
ब्रह्माण्डम्, अखर्वरणगर्वविधूतकरवालजालकालकरपटलघटि-
ताकालशर्वरीतिमिरम्, मदविकटकरटिघटाकठोरकुम्भकूट-
कुट्टनक्कणदसियष्टिदारुणं समरम् ॥

ततः प्रहरणशतदलितसुभटवपुःक्षरितक्षतजपङ्करुद्धरथच -
क्रमालोक्य समरम्, असहनो नृपतिरादाय चापमुग्रशरवर्षी
तथा संगरभुवि गूर्जरानवधीत्; यथा कलहकौतूहलिनो मुने-
र्हृदयमतिविस्मायि बभूव । समरभुवि निहतानां गूर्जराणाम्
अविरलपातिभिः क्षतजपूरैरकालमहाप्रलयार्णवमध्यवासमदि-
शदवन्याः । तदनु समरहतगूर्जररुधिरानुबद्धदुर्गन्धितामपनु-
नोद वसुन्धरायाः सुरभिनिजयशःकर्पूरधूलीपटलविकिरणेन ॥

अनन्तरमाखण्डलकीर्तेरवनिपतिराससाद संपदुत्तुङ्गान्
सौराष्ट्रान् । तत्र सौराष्ट्रपतिभिरुपदीकृतानि वायुजव-
नानि वाजिरत्नानि, कनकमयानि कलितकिङ्किणीरणितमुख-

राणि नयनसुभगंकरणाणि विमानकल्पान्यनल्पानि रथमण्ड-लानि, मेरुशिखरनिकाशानि धनानि च विलोक्य, सेवाञ्ज-लिदन्तुरशिरसस्तानन्वग्रहीत् । तत्र शैलात्मजाचरणारवि-न्दताडनदोहलकलनरक्ताशोकशाखिनम्, कालकूटजम्बूफल-रसचुम्बनलीलाबालम्, फालनयनपावकपुरत्रयपुरोडाशहोम-यजमानम्, रतिचक्रवाकीपतिवियोगाक्रन्दप्रदोषम्, भक्तज-नजन्माटवीदहनदावपावकम्, त्रिभुवनकुटुम्बकाभ्यागारिकं देवं सोमनाथमनंसीत् ॥

तदनु कृतभुवनसांराविणं रावणमिव बहुवाहं यवनमुत्पा-टयितुं चरमार्णवरोधसा पारसीकाभिमुखो जगाम ॥

चकार च भृशमविरलविमुक्तेन शरवर्षेण निरन्तराच्छा-दितमम्बरतलमातन्वानैर्दुःसहतुक्खारघट्टैस्तुरुष्कैः सह सम-रमखर्वगर्वैरुर्वीपतिः । समरभुवि समाकृष्टधन्वा धरणिपति-रत्राक्षीदतिशितैर्भल्लैस्तीव्ररुषां शिरांसि यवनानाम् । एवं स्व-तेजसा निजमिव नीवृतं निरवीवृतत् निष्कण्टकमखण्डमप-रान्तमहीतलम् ॥

तदनु तरणिरिवोदग्रप्रतापो दिशमुदीचीं गन्तुमुपचक्रमे । प्रथमं घोटकखुरक्षुण्णघनघुसृणक्षोदकपिशरोधसमुल्लङ्घ्य सि-न्धुम्, सिन्धुराजमुपययौ । हरिरिव भुजमन्दरमथितात्सिन्धु-राजात् श्रियमाजहार ॥

तदनु सिन्धुराजदर्शितपथो हूणाभिमुखो जगाम । तत्र युयुत्सयाभिपतितान्, सकलभुवनत्राणकर्तृणा धनुषा झटिति तनुत्राणभेदिनः शरान्विमुञ्चन्, हूणानतिसंरम्भिणो रम्भास्तम्भलावमलावीत् ॥

ततो हूणकुलभ्रूणहा महाभुजो नृपतिरासमाद काम्भोजान । तत्र संवर्तकालकालजिह्वाकरालं करवालमादाय, मृणालभञ्जं बभञ्ज समरसंरम्भि काम्भोजबलम् । जहार च तेजस्विनस्तदीयानाजानेयान्वाजिनः ॥

अनन्तरमासाद्य काश्मीरान्, सकलजगत्प्रसिद्धशारदासाक्षात्कारे, कालागरुप्रायकाननपादपे, पाककपिशकुङ्कुमस्थलीलुठनपिशङ्गजठरकस्तूरिकाहरिणसंचारचारुतरे, स्फटिकचन्द्रकान्तरत्ननिर्भरमेदिनीगर्भे तत्र निवसन्, प्रतिदिनमुपायनीकृतगजतुरगकनकमणिघुसृणकस्तूरिकाहरिणचन्द्रकान्तचमरवालेन प्रतिक्षणं विरचितसेवाप्रणामेन काश्मीरकोसलकेकयशकमद्रबाह्लीकप्रभृतिना राजकेन सेव्यमानः कतिचिद्दिवसान्युवास ॥

तत्रान्तरे समाजगाम दवदहनदह्यमानवनतरुशिखरमधुगोलगलिताभिर्मधुधाराभिर्जलधरसमयाभिचारहोममिव प्रवर्तयन्, झञ्झापवनपूरितगिरिगुहाभाङ्कारैः प्रज्वलितपतङ्गका-

न्तज्वालाजालतापव्यथया विमुक्ताक्रन्दानिव गिरीन्विभावयन्, रुधिरलोहितच्छविभिर्मुचुकुन्दपुष्पस्तबकैर्विहितनिजविजृम्भणाय विधये पिशितबलिमिव प्रकाशयन्, पाकपरिस्फुटितैर्गुञ्जाफलैः स्फुलिङ्गानिव पूषकरालातानामनुमापयन्, अविरलमहोष्णमुक्तिभिरर्कांशुभिरात्मविपक्षसकलसलिलाधारभूतां धरामिव दहन्, तापातुरजरदजगरगलगुहावाहिभिर्वायुभिरसहनतया निजोष्मण इव निश्वसन्, निजविपक्षनीरधरजीवनदायिने जलधये कुप्यन्निव तदवरोधभूताः शोषयन्सरितः, मल्लिकाप्रसववैजननः, मरीचिकालीकवारिवर्षवलाहकः, क्षपायुःक्षयः, पादपकुसुमपाटच्चरः, चण्डांशुतापघण्टासरणिः, उदन्याविपणिः, चीरिसारस्वतदेशिकः, वात्यानृत्तनाट्याचार्यः प्रमदालिङ्गनधर्मचण्डालः सरसीवारितस्करो ग्रीष्मसमयः ॥

क्रमेण च दुःसहद्युमणिद्युतौ, द्रुततुहिनौजसि, सुलभस्वेदोदये, महिषमदमाथिनि, मन्दकन्दर्पवीर्ये, विरतसरित्स्रोतसि, शैवालशेषसरसि, श्रवणशल्यझिल्लिकारटिते, खण्डितक्षपायुषि, काननकपोतकूजितोद्वेजितजगति, तीव्रदवज्वलनज्वालाजटालहरिति, पटुपरिमलपाटलीकुसुमपटलपाटलवने, वनतरुवाटकुसुमपाटच्चरे, मल्लिकामतल्लिकोल्लासवासितवासरावसाने, निखिलगिरिनिर्झरसिरास्तम्भभिषजि, पूषकराला-

तप्तोषविवशश्वाविधि, नाडिन्धमश्वसनदूनपतत्रिणि, सर्व-पथीनमृगतृष्णिके, कृतकृष्णलास्फुटने घर्मसंज्वरितकुञ्जर-कुले, वनवराहशर्महारिणि, तापसब्रह्मचारिणि निःशेषपर्णक्ष-यनिर्विशेषाशेषशाखिनि, कन्दलितमुचुकुन्दकान्तिकृतकृतक संध्यानुबन्धबन्धुरकान्तारसीम्नि, स्तबकितधातकीकाण्डे, शु-कमुखशोणांशुककिंशुके, सुकुमारसुमनःश्रीशेखरितशिरीषे, त-प्तपांसुप्रकरानुव्याधव्यथमानपथिकपरिषदि, बुभुक्षाक्षुभितकु-क्षितरक्षौ, धारागृहशरणधनिकजने, ज्योतिरुद्दामत्विषि, क्षी-रशोषक्षामधेनूधसि, विसृत्वरवात्याधूलिधूसरनभसि, पान्थ-निबिडप्रपासद्मनि, पक्त्रिमकपिकच्छूगुच्छे, पृथुपृषदश्वविशी-र्णशल्मलीतूलराशिशारिताशावकाशे, शोषितशमीकोरके, क-ठोरीभवति घर्मसमये, पृथिवीपतिः 'अयमेव कालः प्रालेय-गिरिविजयस्य' इति निश्चित्य, सैन्येन सह महता हिमाल-याभिमुखो जगाम ॥

आसाद्य च हिमालयम् अमन्दचलितहयबलचरणसमुद्धू-यमानसान्द्रपरागसन्नकिन्नरनयनं निर्घृणकोणघातनिःसृतनिः-साणनिनदसकम्पकिम्पुरुषमारुरोह ॥

अत्रान्तरे सामर्षम् आध्मातगवयशृङ्गनिनदमुखरितगिरिक-न्दराविवरम्, अतिकर्कशगोकर्णचर्मनिर्मितवर्मावृतावयवम्,

अचलसमरकर्मममर्मज्ञम्, अतुच्छाच्छभल्लकृत्तिकृतशिरस्त्राण-भीषणम्, आकलितगैरिकतिलकलोहितफालस्थलम्, गुरुकुटजवल्कलकच्छाच्छादितकटीभागम्, अगर्हबर्हिबर्हावलीविरचितापीडम्, स्थूलकरिमस्तकमौक्तिकानुविद्धविकटगुञ्जामालिकाभरणम्, विशङ्कटाटनिकोटिलम्बमानमयूरकण्ठालंकृतकोदण्डकाण्डम्, करतलगृहीतशक्तिशङ्कुलाभिण्डिपालतोमरशिलाजालम्, आयोधनोन्मुखमखर्वगर्वमाजगाम पर्वतीयबलम्॥

अथ निरन्तरधृताखेटखेटकफलकचक्रम्, आगृहीतकार्मुकनाराचभल्लपरश्वथप्रमुखविविधायुधभीषणम्, अनुक्षणकृतसिंहनादबधिरितभुवनविवरम्, अचलसमरसंनाहि तदभिमुखं चचाल धरणीपालसैन्यम्॥

ततस्तयोः सैन्ययोरविरलक्षेपणीयाश्मखण्डवेतण्डशुण्डामुसलचण्डास्फालनरटितस्फुटितब्रह्माण्डम्, उत्पतदवपतदनेकशरशतपक्षशात्कारमुखरितदरीगृहनिवाससत्रासासिद्धकुलम्, अनुक्षणक्षिप्यमाणशिलानाराचनिकरपरस्परनिष्पेषजनितैर्हत-सुभटसुरयुवतिपरिणयनप्रसङ्गमङ्गलप्रदीपरुचिभिरासन्नजलधरबृन्दविद्युदुद्योतायमानैः स्फुलिङ्गपटलैः कर्बुरितगगनतलम्, अतिसंकुलबलकलकलभयपलायमानचमरजालचालितवालशबलविपिनान्तरम, समसमयताडितपटहशतभयङ्करभाङ्कारमेदु

रभागीरथीतुङ्गतरङ्गकूटकोलाहलम्, सैन्यसुभटभज्यमानतटतरुगहनसंभवैरतितूर्णविमुच्यमानकर्णीशरपरम्परापतनभय-कलितगिरिकवचशङ्कादायिभिरद्यापि शंकरशरानलप्लुष्टदनुज-पुरधूमचुलुकितामिव दिवं दर्शयद्भिर्धूममण्डलैः स्मर्यमाणपाण्डवप्रवर्तितखाण्डवदहनसंरम्भम्, दुर्विषहविषदिग्धबाणवेध-मूर्च्छालवीरभटम्, अखर्वपर्वतकुहरप्रतिनिनादमेदस्विनिःसाणदुःसहस्वानभयविविग्नकिन्नरमिथुनारुह्यमाणसमुन्नतशिखराग्रम्, प्रतिकलपात्यमानैर्गण्डशैलैः सविधगतचारणकुलचिन्त्य-मानपक्षक्षपणोद्यतवज्रधरप्रदलनसमयशिलोच्चयमुच्यमानपाषाणवर्षप्रक्रियम्, निरन्तरविमुक्तकरकवनकाणयन्त्रदृषत्पतन-फलत्फलकचक्रकटुरटितघटितकर्णज्वरम्, अधिकभयमायोधनं बभूव ॥

अनन्तरमसहमानतया दुरारोहाण्यपि तुङ्गानि गिरिशृङ्गाणि वल्मीकलङ्घं लङ्घयता, प्रहरणशतैर्भञ्जता, प्रकुपितेन पार्थिवसैन्येन भग्ना बभूव पर्वतीयचमूः। उग्रसमरभीतैरुत्सव-संकेतैरुपढौकितान् शशिकरशुचींश्चमरवालराशीन्, स्थूलस्थूलानि वारणकुम्भमौक्तिकजालानि, चक्षुःप्रियंकरणांस्तरुणान्कस्तूरिकाहरिणांश्च, समादाय गिरेरवरुरोह ॥

अवरुह्य च विपन्नरिपुः, किन्नरमिथुनगीयमानानि नि-

जभुजविजयपद्यानि शृण्वन् , अन्तिकभुवि शंकरमान्यस्य गि-
रेः, कंचित्कालमुवास । तस्मिन्समये, दिव्यभूमितया सदा
संनिहितसकलर्तुकुसुमानि, पाकभिदुरफलापीडनिबिडकण्ट-
किफलकलितकान्तीनि, परिणम्रताम्रचूडचूडाताम्रनवाम्रकिस-
लयाम्रेडितमदनसाम्राज्यचिह्नानि, नवकुसुममधुवर्षसतर्षपान-
हर्षितमधुकरपरिषदध्युषितपुरुषतरुपुषितलावण्यानि, वनदेव-
तातालवृन्तायमानसरसदलनिचयरुचिरोचमानानीचमोचाव-
नानि, परिसरावनीघनीभूतवनीवकुलवनीसनीस्रस्यमानमधुधु-
नीजम्बालसुरभीणि, मदचपलचञ्चरीकचक्रचरणताडनचञ्च-
लचम्पकमञ्जरीपुञ्जसमुत्पिञ्जरवियन्ति, क्रीडच्चिक्रोडशिशु-
चरणशीर्यमाणबहलीभूतकुहलीपरिमलहारीणि, कोमलकुसु-
मकोरकनिकरतारकितकुरवकशिखराणि, सुरभिगन्धिगन्ध-
सारकिसलयतालवृन्तसमुत्पन्नपवनसंपन्नपन्नगाविषतापशान्ती-
नि, सरसरसालशाखाधिरूढकोकिलमुखोदञ्चितपञ्चमाहूत-
पञ्चशराणि, चञ्चुरशुकत्रोटिकोटिपाटितदाडिमफलप्रकराणि,
तरुणकुसुमजालचक्षुःप्रियप्रियालानि स्फूर्जद्भूर्जखर्जूराणि, प्रत्य-
ग्रकुसुमतिलकतिलकितानि, प्रसवामोदमेदुरमाधवीनिकुञ्जानि,
स्फीतजातियूथिकामोदानि, सान्द्रशिशिरच्छायानि परिसरतरु-
लताषण्डान्यालोक्य, धरणिपतिकटकवासिनो विलासिनः सह
विलासिनीभिः, कुसुमापचयकर्मणि निर्ममिरे कुतूहलम् ॥

वनकेलिरागिणीनां वामदृशां हृदयमहरन्त मधुरमधुरं क्वणन्तः कुसुमशरविजयकाहलायमानाः कोमलकण्ठाः कुहूकण्ठाः । अशोकेन हृदयेन, पाटलेनाधरेण, तुङ्गेन कुचमण्डलेन, कृतमालेन केशेन, मदनेन रामणीयकेन, अर्जुनेन हासेन, भद्रश्रिया देहेन, सरलेन संलापेन च, विहारवनराजय इव शृङ्गारराजस्य रराजिरे राजीवलोचनाः । तासां पल्लवमिति बिम्बाधरं विमृशन्तः, पुष्पमिति हसितमीक्षमाणाः, कुसुमस्तबक इति कुचमण्डलीं कलयन्तः, मधुकरमालेति रोमवल्लीं विभावयन्तः, कोकिलकूजितमिति संलपनमूहमानाः, वीरुध इति च ता विलासिनो मेनिरे ॥

तरुलताग्रपुष्पग्रहणेष्वनवधिकोन्नमनभृशकृशवलग्नाः, विशृङ्खलचलितशङ्खवलयबृन्दरणितकान्दिशीकमधुकरपङ्क्तयः, विवलितपृथुकुचकुम्भमुखविभिन्नमृदुसंव्यानबन्धाः, मन्थरमपचिक्युरङ्गनाः कुसुमानि । काश्चन करकलितकुसुमस्तबकाः सकृत्तिकापुञ्जा इव शरद्यामिन्यः, काश्चन कर्णपूरीकृतकेतकीबर्हाः सचन्द्रमःशकला इव सितपक्षादिमतिथयः, काश्चन स्वेच्छाचलितसितासिन्धुवारमञ्जरीचामरा मानसवीचय इव तरलमरालपक्षपालयः, काश्चन स्तनतटप्रतिबिम्बितकङ्केलिकिसलया हृदयगतं रागमिव दर्शयन्त्यः, काश्चन श्रमोद्भिन्नघ-

र्मजलकणैर्मुखैरङ्कुरितामृतबिन्दुमिन्दुं विडम्बयन्त्यः, वामलोचना वने ददृशिरे। तासामलसवलितकटाक्षविक्षेपकाङ्क्षिणे तिलकवृक्षायापि, मदिरागण्डूषपायिने वकुलवनायापि, परिरम्भणसमयजृम्भितमुकुलपुलकाय कुरवकतरवेऽपि, कोमलचरणनलिनताडनसुहृदे कङ्केलिकाननायापि, विलासिनो बबन्धुरभ्यसूयाम् ॥

'सखि मधुकरोऽयमनिवारितगतिराजिहीते तवाधरम्, अन्तरिता भव' इति सख्या संकेततरुगहनं प्रापिता मुग्धवधूर्मुखकमलमुन्नमय्य चुम्बता किमपि बलादकारि रागिणा रमणेन। सान्द्रतरे तरुकुञ्जे कान्तगृहीतायाः कस्याश्चिद्विशृङ्खलविजृम्भितं सीत्कृतम् 'अयि सखि, विषमे विपिनतले स्खलासि' इति, दष्टाधरवेदनाविधुतकरयुगलमणिवलयनिनदम 'उच्चलता गुच्छोच्चयेन खिद्यसे' इति च निगूहमाना सखी चकार विशङ्कां सपत्नीम्। कोऽपि तरुणः पाणिपरिचलितसुमनःस्तबकोत्थितैः परागैरेकस्याः कलुषयन्नक्षिणी, तत्क्षण एवाभिलषितमन्यस्याश्चुचुम्ब बिम्बाधरम्। तासां कुरवककोरककुण्डलानि कर्णयोः कलयन्तः, नमेरुमुकुलहारेण पयोधरतटीं परिष्कुर्वन्तः, वकुलमुकुलमेखलादाम्ना काञ्चीपदमञ्चयन्तः, चम्पकगर्भकेण निर्भरं धम्मिल्लमारचयन्तः, तिलकजनुषा परागेण तिलकशिल्पमानने कल्पयन्तः, विचेरुररण्ये यु-

वानः। तासां स्तनकलशद्युतिनिर्जितैस्तरुकुसुमस्तबकैः षट्पद-विरुतव्याजादाक्रन्दनमारच्यत इति, अङ्गसौन्दर्यपराजिताभिर्लताभिः पवनकृतावर्जनव्याजेन प्रणामः क्रियत इति, करतलरुचिखण्डितकिसलयच्छविभिः कङ्केलिभिः कुसुमभर-विनतविटपलक्ष्येण व्रीडाविनम्रमुखता विधीयत इति, केशक-लापगर्हितबर्हैर्बर्हिभिर्घर्मसमयापदेशेन ताण्डवं संत्यज्यत इति, कोमलालापकुण्ठितकण्ठैः कुहूकण्ठैस्तरुगहनान्तरचरणच्छद्म-नाचर्यते त्रासादन्तर्धिरिति, विलासहसितप्रभाविजितैर्वी-रुत्प्रसूनैरनिलचलनमिषादातङ्ककम्पो धार्यत इति च, विला-सिनो मेनिरे ॥

अथ पुनरेवमारचितविपिनविहरणकेलयो युवानः, का-ननतलसंचरणक्लान्तचरणारविन्दानां घर्मसलिलकणवृन्ददन्तु-रफालफलकानां तपनकरपरिम्लानमुखीनां शातोदरीणाम् अम्बुविहारेण सौख्यमभिलषन्तः, संततपातिततुहिनगिरितु-षारझरीसहस्रसंमेलनशिशिरतरम्, अमृतमधुरम्, आरसि-तसमदकलहंससारसम्, अचिरविदलितकमलकुमुदकुवलय-कह्लारसुरभि, शरदिन्दुचन्द्रिकाधवलम्, उष्णसमयसुखम्, अगाहन्त परिलघु पावनं भागीरथीसलिलम् ॥

चरणयुगलसौभाग्येन नलिनवनलक्ष्मीर्लङ्घयन्तीः, जघन-

परिणाहेन पुलिनमण्डलभूतिमपहसन्तीः, नतनाभिचक्रैरावर्तशोभामपाकुर्वतीः, स्तनकलशयुगललितेन चक्रवाकमिथुनविडम्बनां विदधतीः, कण्ठकान्त्या कम्बुबिब्बोकान् कदर्थयन्तीः, अधरदलरागेण सौगन्धिकश्रियं तर्जयन्तीः, हसितमहसा कुमुदषण्डरुचः कुण्ठयन्तीः, अक्षिवलनेन शफरपरिवर्तनलीलामधरयन्तीः, भ्रूवलनभङ्ग्या तरङ्गश्रियमफलयन्तीर्निशाम्य नितम्बिनीः, लज्जयेव फेनपटावकुण्ठिता सरित्तस्थौ। वाहिनीवारिरुहाणि मकरन्दमिषादङ्गनाजनवदनलावण्यनिहताय निजकान्तिसाराय निवापसलिलमिव विक्षिपन्ति स्म। कृशोदरीणां गम्भीरनाभिचक्रचुलुकितसलिला कृशिमानमभजत शैवालिनी; वृथा व्यपादिश्यत घर्मसमयः। अरुणोत्पलवर्तिनो हंसास्तासां सविभ्रमगतिनिर्जिता लज्जया पावकप्रविष्टा इव ददृशिरे। तासां स्तनजघनास्फालनपरिभूतिमवेक्ष्य पङ्कजहस्तेन कबलितमधुकरपटलकालकूटा सरित् आवर्तभ्रमापदेशादधिगतघूर्णेवादृश्यत ॥

ततोऽम्बु करिपतय इव करशीकरजालकानि करिणीषु घर्मसंज्वरिणीषु तरुणीषु विचकरुः कनकशृङ्गधारिणः कामिनः। तासामलकाग्रमाकुलयन्, अक्षिणी निमीलयन्, कर्णोत्पलानि पातयन्, कपोलमूलानि चुम्बन्, अधरदलानि विशदयन्, सीत्कृतानि जनयन्, स्तनतटानि पुलकयन्,

अनुलेपनानि शिथिलयन्, नखपदानि दर्शयन, नीवीर्विकलयन्, नितम्बबिम्बानि संस्पृशन्, अजायत रतिपर इव रागिणीषु कनकशृङ्गमुखोज्झितः सलिलपातः ॥

अनन्तरमनवरतमज्जनोन्मज्जनक्षोभसंजातफेनसंगतगात्राः सनिर्मोका इव पन्नगाधिराजकन्यकास्तत्क्षणमराजन्त राजीवदृशः । वरतनुवदनानां वारिरुहाणां च कमपि विशेषं कलयितुमक्षमस्य विलासिजनस्य स्पर्शानुमेयमन्तरमिति सति करावमर्शे नालैरभूयत नवपुलककण्टकधारिभिस्तदङ्गैः । अङ्गस्पर्शमासाद्य विलासिनामनङ्गातुरेव बुद्बुद्व्याजेन बभार निम्नगा पुलकम् । वरतनुवदनोपमानसंपत्सपादनाय सरोरुहवनम् अरुणकिञ्जल्कपतनमिषादामिषबलिमिव विधये वितेतार । सलिलविहरणविशीर्णकुन्तलललितानि नयनानि कोमलाङ्गीनां शैवालवनविवलितशफरकुलधियमुदपादयन् । त्र्यम्बकरोषभीत्या जलदुर्गगतमिव कुसुमधन्वानं प्रतिबिम्बितमालोक्य रमणम, बहुमन्यत जलावगाहनं कापि कमलाक्षी । अपाङ्गविवलितया दृशा रतिसर्वस्वमालोक्य कस्याश्चिदधरदलम्, उत्पन्नरागः सपदि तद्ग्रहणकौतुकी कोऽपि, निरन्तरविमुक्तैर्यन्त्रवारिभिरन्यस्या वदनमाच्छादयन्नलभत मनोरथफलम् । अपरा प्रतियुवतिसिञ्चनपरमालोक्य रमणम , अम-

र्षतापानलदह्यमानं स्वहृदयमिव सिञ्चन्ती स्तनान्तरनिपाति निरन्तरमश्रुस्रोतो मुमोच । प्रेयसः सह सपत्न्या सलिलविहारमालोकयन्त्याः परस्यास्तापातिशयेन तत्कालसमेयुषीं मूर्च्छामपनुनोद सखीव सलिलशीकरैः सैन्धवी लहरी ॥

तासां तुहिनवर्षादपि शोककराणि वदनानि वारिजानाम्, वासरविरामादपि आतङ्ककारीणि कुचयुगानि कोकमिथुनानाम्, सलिलशोषादपि तापप्रदानि चक्षूंषि शफराणाम्, तपनकिरणेभ्योऽपि हर्षघातीनि हसितानि कुमुदानाम्, जलपूरादपि तिरस्करणानि जघनमण्डलानि पुलिनानाम्, प्रावृषोऽपि परिबाधकानि कुन्तलजालानि शैवालानां च बभूवुः। तासां नेत्रद्युतिनिराकरणतापदग्धात्पुण्डरीकवनादुत्थितं भस्म; पराग इति प्रज्ञाहीनप्रवादः । केशहस्तत्रस्तैस्तीरशिखण्डिभिस्ताण्डवं त्यक्तम्; घर्मसमयेनेति बालिशवितर्कः । जघनश्रीतिरस्कृतैः सैकतमण्डलैरारचितं लज्जावकुण्ठनम्, तरङ्गोत्क्षिप्तं शैवालजालकमिति मुग्धनिर्धारणम् । वदनकान्तिखण्डितशोभा कमलवनी सकज्जलं बाष्पमुद्ववाम; मधुकरमिलितं मकरन्दपतनमिति मन्दप्रबोधः ॥

अन्तरेऽस्मिन्, अम्भसि निरन्तरमज्जनोन्मज्जनमाचरन्तीनामङ्गनानामतिकठिनकुचतटास्फालनस्फुटितैरम्भःकणनि-

करैर्निर्वापित इव मन्दोष्मा बभूव वासरेश्वरः । स्वयमपि मरीचिभिः सह मिमङ्क्षुरिव चरमाब्धिपयसि पपात सप्तसप्तिः ॥

अथ मुकुलितातपे वासरे, वामभ्रुवोऽपि वाहिनीसलिलादुत्तीर्य, परिसरगतरमणदर्शनरागजृम्भितैः स्वेदाम्बुभिः पुनरप्यार्द्रतामङ्गेषु दधानाः, शिबिरभुवमयासिषुः ॥

ततः प्रत्यग्ररविविरहशोकाविधूतानि कालपटावकुण्ठनानीव ककुभां मुखेषु ददृशिरे तमिस्राणि । अनन्तरमरुन्ध रोदस्योरन्तरं संध्यासरसीरुहाटवीषट्पदपटलायमानमन्धकारम् । हालामदमुदितहलधरहलहेलाघर्षणक्षोभफेनिलकालिन्दीप्रवाहानुकारि तारकाशारमन्धकारमराजत । आसन्नाशिशिरकिरणविहरणहेतोरिव विस्तारिणि वियति शयने, विभावरी तस्तार तारकामाल्यजातम् । क्रमेण समददिक्कुञ्जरपुञ्जचञ्चलश्रवणतालताडनोच्चलितषट्चरणचक्रतरलपक्षच्छटाकान्तिकन्दलितानीव दिक्षु, सायन्तनसमयहूयमानसप्तर्षिमन्दिरसाप्ततन्तवज्वलनधूमपालीपरिमिलनमेदुराणीव वियति, कालायसमुसलकान्तिपिशुनकीनाशवाहनमहिषविकटविषाणवेषमोषोपरचितपोषाणीव शमनसद्मानि, दुःसहकालकूटगरलकलुषितकालकण्ठकन्धरान्धकारोल्लासनपल्लवितानीव कैलासशिखरेषु, कज्जलत्विषि तमांसि तिरोदधुस्त्रीणि भुवनानि ॥

सान्द्ररुधिरधिया तिमिरनक्तंचरजिह्वालीढ इव जगाल सध्यारागः। प्रथमगिरिशिखरवनचारिशार्दूलावस्कन्दनशाङ्किना कुरङ्गमुत्सङ्गगतमुदयरागमिषेण अरुणपटेनाच्छाद्य जजृम्भे सिन्दूरितजम्भारिपुकुम्भिकुम्भत्विषा कुमुदबान्धवेन। विष्णुपदप्रवृत्ता कालभगीरथवशे वर्तमाना हंसधवला चन्द्रिकामन्दाकिनी गिरीशशिरसि निपत्य रसातलमवातरत्। तुहिनकरकरव्यतिकरविघटितमुखाः प्रसुस्रुवुरम्भांसि सलिलसिराश्चन्द्रकान्तदृषदाम्। प्रालेयशैलस्य पद्मरागतटप्रभाजालेषु बालातपधिया निपेतुरुत्सृज्य सविधसरांसि चन्द्रिकाचकितानि चक्रवाकमिथुनानि ॥

क्रमेण च समुल्लासितसागरायां कर्पूरधूलिधवलायां कन्दलितकन्दर्पचापशिञ्जिनीटंकारतरङ्गितदिगन्तरायां पथिकजनप्राणखण्डिन्यां प्रौढायां चन्द्रिकायाम्, निवसितस्वच्छाम्बरदृश्यमानकनकशिलाकान्तिरुचिरोरवः, सकृदुपयुक्तताम्बूलविरलरागदशनमणिविडम्बितदाडिमफलबीजविभ्रमाः, स्नानविमलधूपवासितसुरभिकेशगर्भनिहितनवकुसुमदामरमणीयाः, संक्रान्तमृगाङ्ककलङ्करेखापुनरुक्तकालिमकस्तूरिकापत्रहारिणकमनीयकपोलफलकाः, सान्द्ररचितचन्दनानुलेपनभृशतराशिशिरकुचमण्डलाः, कापिशायनमदकषायितकटाक्षकान्तिकन्दलि-

तकर्णपूरकह्लाररुचयः, विलासस्मितसुधांशुमेदुरितकर्णभूषणमौक्तिकमणिमरीचयः, स्तनतटतरलचारुहारहारिण्यः, चकाशिरे सुरतपरिकर्मधारिण्यस्तरुण्यः ॥

परिष्कृतास्तदा हारांशुपूरसेकशाड्वलितामिव तरलमरतकमहःश्यामितां स्तनतटीं दधानाः, मौक्तिकांशुपूरशैवलायमानेन नायकहरिन्मणिमहसा स्तनतटपत्त्रहरिणानां नवतृणकिसलयकबलानीव घटयन्त्यः, पद्मरागमणिमयोर्मिकामरीचिपटलपुनरुक्तलोहितद्युतिभिरङ्गुलीभिः कर्णाभरणकान्तिवर्षसिक्तमूलतया किसलयिनीमिव भुजलतां दधानाः, नयनकमलानि कलितकालाञ्जनकल्पनतया रमणमुखचन्द्रदर्शनविकासाय नीलोत्पलरूपतामिव नयन्त्यः, माणिक्याङ्गदमयूखजालेन स्तनचक्रवाकमिथुनाय बालरविकिरणमञ्जरीमिव संचारयन्त्यः, वलयखचितमहानीलमरीचिभिरधोमुखपातिनीभिररुणकमलधिया पाणितलाभिमुखपातिनीर्भ्रमरपङ्क्तीरिव दर्शयन्त्यः, विमलदेवच्छन्दमौक्तिकनिकरसंगतैः सौन्दर्यसिन्धुसरसीरुहायमाणैराननप्रतिबिम्बैरासीदिति रतिसमये कमनीयकान्तभुजान्तरचुम्बनकुतूहलोत्पादितानेकवदनमिव हृदयभागमुद्वहन्त्यः, मेखलामध्यमणिमयूखलेखाभिरुन्मुखीभिः सविद्युत इव रोमराजिकादम्बिनीः कलयन्त्यः, वैडूर्यकाञ्चीमयूखार्णसा नित-

म्बस्थलभद्रासनमधितस्थुषो मकरकेतनस्य सकलभुवनसाम्राज्याभिषेकमिव तन्वानाः, तरुणहृदयमहरन्त हरिणलोचनाः ॥

चन्दनजलसेकशिशिरतलेषु, तत्क्षणदह्यमानकालागरुधूपवासितेषु, विघटितमणिगवाक्षविवरमन्दसंचारिमारुततरलितकर्पूरदीपकलिकासुरभिषु, चन्द्रकान्तचषकसंभृतसरसमदिरामोदमेदस्विषु, प्रतिक्षणहिमजलोक्षितक्षौमवितानेषु, कुङ्कुमरसक्षालितभित्तिवलयेषु, मृगमदविलिप्ताजिरेषु वासभवनेषु, बहुलविकीर्णकह्लारदलमृदुलानि, घनसारधूलिसिकतिलानि, मृदुस्पर्शानि हंसतूलशयनान्यध्यासत कामिभिः सह कन्दर्पकर्म निर्मातुकामानि नीरजदृशां बृन्दानि ॥

अनन्तरमभङ्गुरानङ्गम्, अङ्कुरितहारिहसितम्, कुतुककृतचाटुशतम्, अगणितत्रपम्, अङ्गीकृतधार्ष्ट्यम्, अनादृतवाच्यावाच्यमर्यादम्, आचरितोपचारम्, अखण्डितप्रेमरसम्, अशिथिलहृदयबन्धम्, अन्तरितान्यभावम्, अविरललाक्षाङ्कितचरणोरुतलसनाथम्, विलासिजनानुभूयमानपरिरम्भविशेषविलसितम्, औपनीविककरतलस्पर्शसुखविजृम्भितपुलकजर्जरितकपोलतलम्, द्रुततरजघनोपगूहनविधिविभिन्नमणिरशनाशकलशारितशयनतलम्, अतिपृथुकुचकुम्भगलकपोलाधरबिम्बतलनवनवविधीयमानरोमाञ्चजनन-

मृदुनखमुखाच्छुरितकम् , अधरदलसंपुटनिभृतचुम्बनसुख-
विजिह्मविवलितभ्रूलताविलासविजितमदनकोदण्डविभ्रमम् ,
अदयदष्टाधरवेदनाविधुतकरयुगलमणिवलयनिनदमुखरम् , अ-
नवरतविशृङ्खलचलितमेखलानिनादव्यज्यमानवीरायितविहार-
प्रपञ्चम् , बहुविधस्थितिविकल्पनातरलमणिभूषणरणितमां-
सलमणितवाचालम् , अतिरभसकचग्रहविशीर्णशेखरोड्डीन-
मधुकरपटलझंकारमुखरम् , अधिकजवविहृतिविलूनविमल-
हारमुक्ताफलप्रकरतारकितशयनसंनिकर्षम् , संव्यानविनय-
नलज्जासज्जितदृढबाहुस्वस्तिकविघटनपरकामिकरतलत्वराविद-
लितशङ्खवलयशकलबृन्ददन्तुरशय्यासूचितमौग्ध्यम् , अति-
बहुलकुचकलशकुङ्कुमपत्रभङ्गरेखालाञ्छितप्रच्छदपटम् , अ-
तिचटुलकचाकर्षणोन्नामितमुखकमलसदशनपीडाधरपानजनि-
तसीत्कारमनोहरम् , अनर्गलस्वेदाम्बुकणनिकरदूषितफाल-
तलकलितकालेयकतिलकशिल्पम् , त्रैविक्रमविहरणविलासो-
दञ्चितचरणतलरागरसरञ्जितवितानम् , चलितमणिमयाभ-
रणझणझणात्कारसमुन्नीयमानरमणकरयुगपञ्जरडोलाविहारो-
त्सवम् , प्रत्यग्रयावकपङ्काङ्कितपाणितलद्वयीसंकालिततरुण-
मनोरथफलम् , प्रतिक्षणभद्रकर्तरीकरणानिरङ्कुशविमुक्तहुंकार-
सुभगम् , अलक्तकरसार्द्रनिजचरणनिक्षेपारुणमृगाक्षीदक्षि-
णोरुकाण्डकण्ठोक्तकेलीविकल्पम् , अनुकलनाथजीववाक्यर-

चनाभङ्गिप्रकाशितहृदयसंतोषम्, शरद्दिवसमिव सद्यस्तनखण्डाभ्रनिवहम्, प्रतिपन्निशामुखमिव प्रतिपन्नार्धचन्द्रस्फुरणम्, चतुर्मुखावस्थानमिव परिचितपद्मासनम्, अरण्यमिव संनिहितचटकविलसितम्, अतन्द्रमजायत सुरततन्त्रम् ॥

किं च, यद्यद्दिवसमाम्नातम्, यद्यन्मनसि परिस्फुरितम्, यद्यन्मन्मथेनोपदिष्टम, यद्यन्मदेनोपकल्पितम्, यद्यत्प्रणयेन प्रणीतम्, यद्यच्चातुर्येण जनितम्, यद्यदिच्छया प्रकल्पितम्, यद्यत्प्रहर्षेण प्रकटितम्, यद्यद्वैयात्येन विवृतम्, यद्यत्प्रतिभया प्रकाशितम्, अतिमनोहरमनेकोपचारपूर्वं विविधमानङ्गात्मकं तत्तदनुबभूवुरन्योन्यानुरक्तानि कामिमिथुनानि ॥

ततः स्थूलनिश्वासजृम्भणोत्कम्पितकुचमण्डलाः, लुलितलुलितमध्यस्तनतटलक्ष्यमाणसरसनखपदश्रेणयः, स्वेदकणनिकरखण्डितगण्डपत्रावलयः, स्विन्नललाटतटविलगितचुम्बनग्रहणसंगतालकाग्राः, श्रमवशसामिनिवसितक्षौमशरीरसंधयः, तल्पपतितमेखलादैर्घ्यविवृतजघनपरिणाहाः, निःशेषविलुप्तचन्दनाङ्गरागिण्यो रागिणामङ्कशय्याशायिन्यो विरेजुरनञ्जनलोचना वामलोचनाः ॥

तदा निरन्तरनिपतितचन्दनधूलिविसरधूसराणि, दलित-

दन्तताटङ्कशकलनिकरदन्तुराणि, विलुलितमाल्यनिचितानि, संलक्ष्यमाणसयावकचरणमुद्राणि, संक्रान्तचारुकस्तूरिकापत्रभङ्गमकराणि, विशीर्णविविधमेखलारत्नविसंस्थुलानि, संलग्नमृगमदसुगन्धीनि, संचूर्णितकर्पूरदामसौरभभ्राम्यदलिकुलानि, विदलितशङ्खकङ्कणखण्डसंकुलानि, क्वचित्संकलितकालागरुपङ्कमलिनानि, क्वचित्सान्द्रसिन्दूररेणुजालरञ्जितानि, क्वचित्कुङ्कुमतिलकचिह्नितानि, क्वचित्सरसकालाञ्जनलाञ्छितानि, बभासिरे बहुविधसुरतकरणसूचकानि शयनानि ।

अत्रान्तरे स्वयमपि रजन्या सह रिरंसुरिव चरमगिरिकन्दरागृहेषु चन्द्रमाः प्रापदाशां प्राचेतसीम् । रतिसमरविजृम्भितानि रागिणीनां मन्द्रमधुराणि मणितभणितानि पठितुमुपचक्रमिरे मञ्जुलवाचः पञ्जरशुकाः । सुरतखिन्नाः शोभावतीः सुन्दरीरीक्षितुमिव विकासितकमललोचना बभूवुः सरस्यः । सुरतविरतिविश्रान्तरमणीनूपुररवानुसरणमिव चक्रिरे मञ्जुभिर्निनदैस्तत्क्षणप्रबुद्धानि भागीरथीसारसकलहंसमिथुनानि । सुरसरिदुत्तीर्णपश्चिममुखजरठजालपादकान्तिश्चरमार्णवपयसि पपात शर्वरीरमणः । जजृम्भिरे च गण्डमदसङ्गिभृङ्गसंगीतमिलिताः शय्योत्थितस्य काननकरिकुलस्य कर्णतालदुन्दुभिध्वनयः । रतिखिन्नकिन्नरमिथुनवदनश्रमजलकणहारिणः, तर-

लितचमरवालधयः, तुहिनझरीपृषतभृतः, काननकरिमदसुगन्धयो मन्दमन्दं ववुर्वैभातिका मातरिश्वानः। प्रत्यूषतक्षतष्टे प्रत्यक्छिखे पर्यस्ततारकाकुसुमे पतिते तिमिरतरुषण्डे तन्मूलोद्गताः प्रवालपाटलाः प्ररोहा इव ददृशिरे प्रथमगिरिशिरसि पतङ्गपादाः। कुरुविन्दकालकलङ्ककनीनिके दीर्घालोकक्षमे सितरुचि चक्षुषि तिरोहिते, कालेन भिषजा दर्शनपथरोधि तिमिरपटलमुद्भिद्य, पुनरपदोषमाविष्कृतमब्जकान्तं विलोचनमासाद्य, विदिद्युते जगती। कलितजलजधृतिरुल्लसदरुणकिरणचक्रा लोकजननी देवतेव पुरातनी दिवसकृतो मरीचिर्मर्त्यभुवमवतीर्णा शमयामास सान्द्रतमोभिधानान् यातुधानान्। पद्मिनीरजोरक्तमम्बरं विरलप्रसारितकरः पस्पर्श किल दर्शिताशः पद्मिनीभुजंगः। अतीत्य वरुणालयमरुणमारुतिना दीधितिदहनोद्दीपितां गगनलङ्कां हरिभिः समभ्येत्य प्रांशुभिरंशुबाणैर्निबिडनिशातिमिरनिशाटझाटस्य विधाय विरामं रविरामः पावकप्रवेशेन प्रकटितपवित्ररूपामाददे सीतामिव तैजसीं लक्ष्मीम्॥

क्रमेण च कोकयुवतिशोकापनुदि भगवति किरणमालिनि किंचिदुन्मुक्तपिङ्गलिम्नि समुदिते, प्रौढे प्रभातसमये, धरणिपतिर्निर्वर्त्य तत्कालसमुचितां क्रियाम्, विजिताशेषराजमण्ड-

लतया जेतव्यमपरमपश्यन्, विजयसमरसंरम्भाद्विरम्य स्वपुरं प्रति यियासुरासीत् ॥

अत्रान्तरे नातिदूरवर्ती मधुरकण्ठो वैतालिकः कश्चिदुच्चैरिमामार्यां पपाठ—

'भुवनान्तराणि गत्वा निजकरनिर्धूतनिखिलतिमिरौघः ।
भास्वानयं प्रतापी पूर्वगिरिं भजति भूतये जगताम् ॥'

राजा तु तामुपश्रुतिभूतामाकर्ण्य स्वपुरगमनोन्मुखो जयशालिनीं ध्वजिनीमुदतिष्ठिपत् ॥

अथ दुर्दमकलिङ्गकर्दमविमर्दनविकर्तनेन, दुर्लङ्घवङ्गाङ्गवनभङ्गपरशुना, लाटगौडगिरिकूटपाटनपविना, पाण्ड्यपरिबृढशस्त्रशास्त्रमतवैतण्डिकेन, केरलसरोग्रीष्मेण, भोसलाम्भोधिकुम्भोद्भवेन, सुह्मजिह्मगातङ्कताक्ष्र्येण, मागधवधूबाष्पाम्बुवर्षवासवेन, गान्धारगन्धकुञ्जरपञ्चाननेन, सौराष्ट्रदावानलधारावर्षेण, काम्बोजाम्भोजहेमन्तेन, दुर्मदतुरुष्कवृक्षाशनिना....
... ... ... ... ... ... ॥

अथ विषमदृषत्खण्डविसंस्थुलाम्, जरत्तरुकोटरलुठितजरदजगराविकटगलगुहानिष्ठ्यूतस्थूलपवनसंधुक्ष्यमाणदवदहनशिखाकलापाम्, इतस्ततः क्षिप्रभ्रमदभ्रपातवातप्रमीव्रातम्, उग्रशरभचक्रवक्रदंष्ट्राघातमोहितरोहिताम्, बुभुक्षाक्षुभितकुक्षितरक्षुतीक्ष्णनखरकुलिशकोटिकुट्टनाक्रन्दिहरिणयूथाम्, वि-

विधगिरिदरीजृम्भितझरीशिशिरजलकणसेकसुकुमारकिसलय-ग्रन्थिपर्णग्रसनप्रमुदितचमरीवर्गाम्, परुषकपिकच्छूविच्छुर-णखर्जूत्कटमर्कटाम्, कर्करेटुकटुरटितविरच्यमानपथिकजन-कर्णज्वराम्, तारुण्याम्रेडितलावण्यशबरपुरवरवर्णिनीकर्णपूरी-कृतकङ्केलिपल्लवाम्, उत्कुपितकेसरिवरकरनखरपञ्जरभज्यमा-नकुञ्जरकुलकण्ठघर्घरनिर्घोषभीषणाम्, चटुलशुककुलचञ्चूग्र-ताडनपतितदाडिमफलस्थपुटितोद्देशाम्, अनिलबलपतितपचे-लिमदधिफलभक्षणपुलगल्लभल्लूकप्रकराम्, अविरलफलभार-नितान्तनतदन्तशठनिबिडनीडप्रसूतकलविङ्काम्, आखेटवि-हारिखेटकिरातझाटसपत्राकृतरौहिषरुधिरगण्डूषभूरिभेरुण्डम-ण्डलाम्, क्रीडाविधेयगौधेयविहारसौधायमानवल्मीकाम्, क-तिपयदिवसोद्भिन्नकोमलमरीचाङ्कुरग्रासमुदितहारीताम्, अति-चपलकपिकुलकरतलतरलिततक्कोलसुरभितप्रान्ताम्, अफल्गु-गुग्गुलुद्रुमनिर्यासद्रवतिम्यत्स्थलसिकताम्, प्रक्रीडत्प्रौढकिटि-विकटपोत्रोल्लिखितपल्वलक्रोडाम्, चिक्रोडदशनदष्टस्वादिष्ठम-धुष्ठीलप्रसवाम्, कलहायमानकपिञ्जलगरुदनिलचञ्चलचम्प-कस्तबकाम्, खञ्जरीटमिथुननिधुवनरभसधूतमधुमधुरमधू-कमाद्यन्मधुकराम्, तरुणतृणध्वजकुञ्जान्धकारपुञ्जितोलूकगु-ञ्जितभीषणाम्, उल्लसितचिल्वचिरिबिल्वकिञ्जल्काम्, वि-सृमरविविधवीरुद्व्रातजातयातयामेतरकुसुमकेसरविसरधूसर-

वासरकरमरीचिनिचयाम्, उल्लसन्नवपल्लवप्रचयभासुरशिरीषगोशीर्षविटपिसंविशदाशीविषाम्, पृथुलकुचोपरिदृश्यमानललितपत्रावलीरमणीयां वेश्यामिव विविधपल्लवरागं विवृण्वानाम्, उल्बणसिंहनादां रणभूमिमिव खड्गिप्रभिन्नकरिवरसहस्राणि दधानाम्, परिचितषट्ग्रन्थप्रपञ्चां पण्डितमतिमिव सुलभविपद्दर्शनाम्, नवमालिकासुरभिचारुचलदलकाननां सुभद्रामिव पृथुलकरवीरपुरुषसङ्गमाविष्कुर्वतीम्, परिणतलोध्रपाण्डरमुखीं गर्भिणीमिव प्रत्यग्रप्रसवमाकलयन्तीम्, प्रकटितकपोतपालिकापातां जीर्णभवनश्रियमिव बहुविधगिरिकाननविवराणि बिभ्राणाम्, विरचितबहुरूपविहारां नटीमिव तालस्थितिमभिन्दानाम्, सवनप्रियां ब्राह्मणजातिमिव गायत्रीजपासक्तिमुद्वहन्तीम्, शबरजातिमिव विहितस्नुहितरुचिरवासाम्, सदीश्वरसेवामिव संनिहितश्रीफलाम्, रामायणकथामिव कपिकुलकृततुङ्गसेतुबन्धाम्, कुनृपतिराज्यस्थितिमिव कण्टकशतखिलीकृताम्, विविधभूरुहविशेषामगाहत विन्ध्याटवीम् ॥

यत्र ब्रह्माण्डलङ्घिशिखरबृन्दतया विन्ध्यगिरिमम्बरतलसंचरणावकाशदानार्थमनुसर्तुं तत्पादसेवावतीर्णाः सलिलधरा इव विभान्ति गन्धद्विपाः । यामधिवसति वेधसः कल्मषोपादाननिर्मिता निसर्गघोरा निषादजातिः ॥

तत्र पुनरभ्रंलिहविटपसहस्रपरिवहपवनविशीर्णजीर्णपर्णपतनकषायितस्वर्णदीसलिलस्य, अकाण्डकण्डूतिनिघ्नविघ्नस्वामिसामिभुग्नगण्डपिण्डसतर्षघर्षणसंक्रान्तमदजलमलिनितस्कन्धस्य, मदसहनमाहेश्वरीवाहनवृषलम्बगलकम्बलकषणमसृणत्वचः, पचेलिमफलरसचुम्बनचुञ्चुचञ्चुना पञ्चमीयानगरुडेन परिष्कृतशिखरस्य महतो वटतरुषण्डस्य मध्यभागे, प्रतिक्षयक्षीणक्षेमपितामहकोटिकरोटिकूटघटितगोपुरकूटम्, उत्कटध्वजपरिपाटीपटीकृतवासुकिकुलनिर्मोकपट्टम्, पुराणदिक्करटिविशङ्कटदन्तकाण्डविरचितबहिर्द्वाररमणीयम्, द्वारदेशोद्भूतप्रभूतभूतावासद्रुमशिखरप्रेङ्खोलाशिखिकुलकन्धरादामसहस्रम्, समधिकरुधिरमदिरापानमदोड्डामरडाकिनीकुचकलशकुल्यमाल्यावल्यारावमुखरितवनोपशल्यम्, बल्यर्थकृत्तभीषणमहिषघटाकण्ठकुहरघटीयन्त्रक्षरितबहलरुधिरपिच्छिलस्थलस्खलितपिशाचलोकप्रतिक्षणकृतभैरवमदाट्टहासमुखरिताट्टालम्, प्रयतयममहिलाप्रवृष्टरत्नखचितप्रच्छन्नकवाटम्, अविरतवरुणोपचीयमानसुरार्णवपूरभारोच्चण्डचामुण्डालोचनपुटपाटलिमपल्लवितान्तरम्, उदग्रन्यग्रोधविटपिविकटशाखान्तरालप्रेङ्खत्प्रेङ्खाधिरूढविकृतवेतालमिथुनम्, पुरातनयुगनियुतासुवियुतदैतेयविपक्षाध्यक्षचक्षूरन्ध्रकरालाङ्ककङ्कालकल्पितगवाक्षशतोद्भासितमण्डपम्, पर्यन्तस्थापितदारुणशूलशिखरप्रोतदारुक-

प्रमुखदानवशिरश्चक्रम्, उग्रबलिभूमिपरिसरपर्यटनसनियमर-
विरथचक्रचीत्कारबधिरितहरिदन्तरम्, सिद्धिकृपणसाधकगण-
कृपाणोत्कृत्तमनुजबलिनव्यक्रव्यलाभहृष्यदभव्यक्रव्यादव्रात-
म्, कुलगिरिगुरुमायाहरिकिरिविभुवपूरोमचयाच्छादितच्छ-
दिषम्, बलिपशुशतपिशितगृध्नुजरद्गृध्रपत्त्ररथातुच्छपत्रच्छटा-
च्छायाच्छन्नप्रसन्नभूतयूथम्, सर्वसुपर्वगर्वनिर्वासनवीर्यविका-
सकासरासुरकायशोणितसुधालिप्तादभ्रवप्रमण्डलम्, क्वचिन्नि-
र्माणमातृकाभिरिव कालरात्रेः, कालकूटच्छायाभिरिव कल्मष-
निकुरुम्बैरिव विरचितावयवाभिः, कालानलकीलकपिलकच-
निचयाभिः, इन्द्रधनुर्द्वन्द्वविभ्रमबभ्रुरोमभ्रूयुगाभिः, कुटिल-
गम्भीरघोणाकुहरवहददभ्रनिश्वासभ्रमदभ्रपटलाभिः, विकट-
शकटीचक्रसदृक्षचक्षुर्भिः, विशङ्कटदन्तान्तरकन्दरलुठितकब-
न्धपरिषदजस्रस्रवदास्रप्रस्रवणसृक्कभिः, कज्जलमलिनकपोल-
लोलकपालकुण्डलाभिः, अन्तर्लुठदहिपरिबृढपातालबिलप्रति-
मल्लमुल्ललितपृथुलजिह्वमास्यबिलं व्याददतीभिः, विकटकुचोत्स-
ङ्गरङ्गताण्डवितभूरिपुरीतत्प्रोतचण्डनृमुण्डस्रग्भिः, करिकर्णता-
लविततनखशूर्पमण्डलाभिः, नयनागोचरनाभिमहागर्तगाम्भी-
र्याभिः, बहुमानुषरुधिरपानोच्छूनपिचण्डब्रह्माण्डाभिः, स्थूला-
यतरोमाटवीजटिलतया शाड्वलस्थलोपमेयां मध्यरेखामुद्वहन्ती-
भिः, विपुलमुखदरीविवराभिर्विहारगिरिमेखलाभिरिव क्रौर्य-

सिंहस्य, कलितकरालदंष्ट्रास्तम्भाभिर्जङ्गममण्डपिकाभिरिव मृत्योः, निर्घातघोरगर्जितोद्गाराभिरुत्पातकालिकाभिरिव परुषपाषाणवर्षमोक्षस्य, विविधशवास्थिमालाधारिणीभिः पितृवनदेवताभिरिव मूर्तिमतीभिर्डाकिनीभिरधिष्ठितम्, क्वचिदमन्दपीतमन्दारशीधुमाद्यदिन्द्राणीमदहसितमहोवध्यमानमिथ्यादुग्धपूरपानविवलमानब्रह्माणीयानहंसमण्डलम्, क्वचित्पाश्वजन्यसंतानशङ्खोदरस्थानि दुग्धार्णवाहृतानि पयांसि उत्सङ्गशायिनामुत्पातजलधरकटुकण्ठक्रन्दितानामर्भकाणामास्यदरीषु दरीदृश्यमानस्थूलरसनास्वावर्जयन्तीभिर्वेतालपुरन्ध्रीभिराकुलितम्, क्वचिद्गाधिष्ठतालद्रुमद्वयसानाम् अतिलोमशत्वादृक्षकुलसदृक्षच्छवीनाम् अवयविनामिवान्धकाराणां कशीयस्तया वपुषां पवनसंस्पर्शेनापि तत इतः स्खलताम् अलब्धभक्ष्यत्वादनुपलक्ष्यकुक्षीणाम्, 'क्व पुनरन्नम्, क्व पुनर्मांसम्, क्व मेदांसि, कुत्र वसाः, क्व चास्राणीति यूथं यूथमुद्भ्राम्यतां पिशाचानां बृन्दैर्निरन्तरम्, क्वचिद्विकटनिजवक्रकुहरनिर्यत्स्फारदहनार्चिःपच्यमानसरसशवशतरसस्वादिमतुष्यदनशनायस्तभूतकुलम्, पितृपतिपुरमिव प्रेतकुलाध्यासितम्, त्रिविक्रमचरितमिव प्रकटितबलिभूमिनिग्रहम्, नृसिंहमिव तुङ्गमणिस्तभसंभूतप्रकाशम्, अनश्वरमहैश्वर्यं चण्डिकालयमपश्यत् ॥

अनन्तरं च नन्दनवनदेवताविकीर्यमाणकल्पतरुकुसुमोपहारम्, मारुतावरोधवधूकरकलितमहिषासुरवालसंमार्जनीविमृज्यमानस्थलम्, निधानाधिदेवताविधीयमानरत्नोपहाररमणीयम्, कमलाकरतलविधूतकेलिकमलमकरन्दबिन्दुसिच्यमानप्राङ्गणम्, भारतीपठ्यमानमहिषासुरादिदनुजमथनगाथासहस्रम्, विश्वावसुविलासिनीगीयमानविविधदनुजविजयापदानप्रबन्धमुखरम्, पन्नगाधिराजकन्यकाकल्प्यमानरत्नप्रदीपभासुरम्, विन्ध्यवनदेवताविकीर्यमाणकर्पूरधूलीसिकतिलम्, उपनिषदुच्यमानशक्तिसूक्तिरहस्यम्, धूमोर्णासूत्र्यमाणनूतनास्थिमयहारम्, स्वाहासंपाद्यमानकालागरुधूपवासितम्, वरुणान्तःपुरिकासमर्प्यमाणवारुणीकलशशतरमणीयम्, शतमखवधूनिधीयमानसरससुधापूर्णकुम्भम्, अनश्वरमहैश्वर्यमभ्यन्तरं प्राविशत् ॥

अन्तः प्रविश्य च ब्रह्मशिरोवन्दिताम्, आब्रह्मस्तम्बजननीम्, चण्डकरशशिमण्डलकुण्डलललितगण्डस्थलाम्, प्रलयदहनदग्धभुवनभस्मकृततिलकभासुरफालफलकाम्, पुराणब्रह्माण्डखण्डशतकलितमुण्डभूषाम्, आप्रपदीनया कैश्चिदृचां व्याकर्तृभि. कैश्चिद्यजूंषि गृणद्भिः कैश्चित्सामानि गायद्भिः कैश्चिदथर्वाण्यधीयानैरन्यैः स्तुवद्भिरपरैरट्टहसनमाचरद्भिरितरैरा-

लपद्भिः परैश्च जृम्भिकानुबन्धादास्यविवराणि व्याददद्भिः पूर्वमहाप्रलये परेयुषां विश्वसृजां शिरोभिर्विरचितया स्रजा विभूषिताम्, शेषफणामणिजन्मभिः पुराणदिव्यमातङ्गमूर्धन्यैः पाञ्चजन्यकम्बुसंभूतैरादिमघृष्टिनिष्ठ्यूतैः संवर्तजलधरोद्गीर्णैर्मायाशफरकायोत्पन्नैः कन्दर्पकार्मुकपुण्ड्रेक्षुप्रभवैश्च मुक्ताफलैर्निर्मितया हारयष्ट्या छायापथरेखया शारदीं निशामिव समुद्भासमानाम्, शशिहरिणचर्मनिर्मितचण्डातकाम्, फणिपतिनिर्मोकपरिधानाम्, पर्यन्तखचितसमग्रग्रहमणिहिमकरैः प्रत्नयुगरत्नसानुरचितैः केयूरभूषणैर्भासुरबाहाष्टकाम्, भगवतीमादिभैरवीमद्राक्षीत् ॥

दृष्ट्वा स पुनरष्टाङ्गस्पृष्टभूमिः प्रणम्योत्थाय विस्मयस्मेरमतिरचिन्तयत्—'एषा खलु चराचरजगत्प्रकृतिर्मूलप्रकृतिरिति मुनिभिरुद्गाहिता। अस्यास्तु बालिकायाः पांसुकेलिभवनानि सप्त भुवनानि। अस्याः पुनरपदानभोगावली वेदाः। तेजसः स्फुलिङ्गः पतङ्गः। कान्तेर्बिन्दुरिन्दुः। मङ्गलगायिका वाणी। आज्ञाकरी लक्ष्मीः। वरुणस्तोयकर्मान्तिकः। मालाकारो वसन्तः। क्रीडावाप्यः समुद्राः। दासीवर्गः स्वर्गयोषितः। अस्यास्तु शक्तिरध्यास्य विरिञ्चमुदञ्चयति प्रपञ्चसंभवम्। सत्त्वगुणवर्तिष्णुं विष्णुमाश्रित्य पुष्णाति भुवनरक्षाम्। हरणाय जगतामास्थाय रुद्रमुन्निद्राति। अस्यास्तु स्वप्न एव सु-

रासुरप्रलयः । प्रबोधे सति प्राणन्ति जगन्ति । किंच महाप्रलयेष्वस्यामेव विरिञ्चादयो विलीयन्त इति निर्णयन्ति निगमान्तगिर.' इति चिन्तयन् पुनः पुनर्देवीं तां प्रणनाम ॥

ततो निर्गत्य, दुर्गानिलयस्य नातिनेदीयसि नातिदवीयसि प्रदेशे कटकं निवेश्य, नृपतिरादिमशक्तेः सेवाकौतूहलेन विन्ध्यवन एव कतिचिदहान्यवात्सीत् ॥

ततो धरणिपतिचोदिताः शिबिरवासिन्यो विलासिन्यः सह महायोगिभिरुपदंशमांसमेदुरेण मणिकलशसहस्रसंभृतेन मधुना देव्या विन्ध्यवनवासिन्याः कर्तुमुपचक्रमिरे सर्वोपकरणसमग्रां पूजाम् ॥

तदनु भैरवरसनाकन्दलोल्लासकादम्बिनीम्, कात्यायनीहृदयकैरवविकासकौमुदीम्, अशेषविषमहोष्मनिर्वापणदिव्यौषधीम्, मातङ्गीमानसनिवासराजहंसीम्, चामुण्डावदनसरोजबालार्कप्रभाम्, मन्मथरागराज्यप्रदानमहालक्ष्मीम्, सुरनरयुवतिसुरतनाटिकानान्दीम्, सकर्षणमदलीलासखीम्, योगिजनसंविच्चक्षुरञ्जनवर्तिकाम्, सिद्धकुलाधिदेवताम्, उपरितरलसरससहकारपल्लवतया स्वभजनप्रवणशाक्तजनाह्वानहेतोरङ्गुलीमिवोदस्यन्तीम्, आत्मीयरसानुभवार्थमङ्कुरितानेकजिह्वामिव दृश्यमानाम्, अन्तर्गतगगनतलप्रतिबिम्बतया

भैरवतान्त्रिकपापपटलमिवाधः पातयन्तीम्, सुभ्रुवां प्रतिमामुखकमलमूलपङ्कमिव दर्शयन्तीम्, उल्लसितधवलोपहारकुसुमत्विषा निजास्पदभूतस्य चन्द्रमसः कलङ्कापनोदननिःसहममृतमिव हसन्तीम्, आलक्ष्यमाणनिहितनीलोत्पलनिवहतया भैरवीदिदृक्षया विवृण्वतीमिव विलोचनशतानि, अतिबहलमधुकरपटलमधुरझंकृतिभिः सुदृशामानन्दोत्तानगानतानमिवाचरन्तीम्, प्रज्वलितदीपिकालोकचक्रवालपरिवृतामग्निप्राकारमध्यगतामिव सुधाम्, अनुक्षणस्फुटितैः फेनबिन्दुभिः स्वयमपि दुर्गार्चनपुष्पाणीव विकिरन्तीम्, अर्णवकफस्यामृतस्य निन्दानिष्ठीवनमिवाचरन्तीम्, अनवरतोल्लासिभिर्बुद्बुदैः कात्यायनीभक्तिपुलकमिव कलयन्तीम्, अश्रान्तघूर्णनाघोषैरपहाय भक्तिं मयि दुर्मेधसा द्विजकुलेन स्वादिमहीनः सोमः सवनेषु स्वीक्रियत इति रोषाट्टहासमिव रचयन्तीम्, गन्धेन निरन्तरप्रसृतेन रोदस्योरन्तरमधिवासयन्तीम्, करिजातिमिव कलितमदाम्, अरण्यानीमिव अतिमुक्तसेवितां मधुरमधुरां मदिरां निवेदयामासुः ॥

निवेद्य च निर्भरमधासिषुः सुधातिरिक्तरसां सुरां वनितापुरःसरं महायोगिनः। निर्भरमास्वाद्य मधु माद्यतां महायोगिनां परस्परमेवमालापाः प्रासरन्; यथा— ‘जयतु महादेवी।

जयतु विभुरादिकापालिकः । जयतु भैरवतन्त्रम् । जयतु पशुपाशसमुच्छेदनशङ्कुला सारस्वतगन्धचन्दनलता गान्धर्वज्योतिरुत्तेजनारणिः सद्यो निर्वृतिकारिणी भवभयहारिणी वारुणी । अहो माधुर्यमासवस्य, अहो गन्धः, अहो रस , अहो मनोहारिता; अहो स्वादिमा उपदंशमांसानाम् । अलमलममराणाममृतपारणया । अद्यापि तदाधारभूतस्य चन्द्रमसः कलङ्कक्षयो वा न जातः । साधु वसुमति साधु भवसि भगवत्याः प्रसादपात्री, यतः सरसं मधु समास्वाद्य मदेन घूर्णसे । त्वमपि पवन शाक्तोऽसि, यतो गन्धोत्तमागन्धमादाय गच्छसि; इदानीं गन्धवाहनामधेयं त्वय्युपपन्नम् । आदिमशक्तये पुराणसाधकविकीर्णाः पूजामधुबिन्दव इति नभसि नक्षत्रबृन्दान्याहुरागामिकाः । कलितकल्पकतरुकलिकावतंसां मांसलदिङ्मातङ्गवसोपदंशिनीं स्वादिमहारिणीं वारुणीमुपहृत्य देव्यै तानि तानि पदान्यलभन्त पुरन्दरपूर्वाः सर्वाः सुपर्वततयः । नारायणोऽपि स्पष्टमष्टमेनावतारेण भैरवतन्त्रप्रथमाचार्यो बभूव । स पुनरेक एव दण्ड्यो ब्रह्मपिशाचः, यः श्रुतिदुर्वचःपठनदुर्गन्धिभिर्मुखैर्वारुणीपायिनामापदे दोषमाचष्ट । अत एव तस्य दण्डमकुरुत देवो महाभैरवः' इत्यन्योन्यमाभाष्य, मधु पिबन्तश्च वमन्तश्च नदन्तश्च नृत्यन्तश्च गायन्तश्च मदस्य परां काष्ठामवापुर्महायोगिनः ॥

किंच, अङ्गप्रेङ्खोलनम्, अलकचलनम्, अक्षिविघूर्णनम्, अधरवैशद्यम्, अस्थितिनियमम, अतन्त्रवाग्ग्रहणम्, अमर्यादजल्पनम्, अनल्पविभ्रमम्, अधिकपारवश्यं च जनयन्ती सुरा सुरतक्रियेव सुदृशामभूत्। अनुपदवचःस्खलनम्, अव्याजहसितम्, अकारणगतागतम्, अकृतगलदंशुकप्रतिविधानम्, अगणितरहस्यविवरणम्, अनङ्कुरितान्यप्रबोधम्, आविष्कृतानिर्बन्धपरिहासप्रबन्धमासवमदमनुबभूवुरायतदृशः। मदनमुद्भ्वयता, मानमपनुदता, चेतसि किमपि जृम्भयता, दृशि विभ्रमविशेषं जनयता, विशकलितार्थानि वचनानि कलयता, विलासहारि हसितमङ्कुरयता सुदृशामभूयत सुरतगुरुणेव सुराया मदेन ॥

कमलदृशां कापिशायनमदरञ्जितं कपोलयुगमरुणचीनांशुकनिचोलितमिव दर्पणतलमङ्कुरितोदयरागमिवैन्दवं बिम्बमदृश्यत। हरिणदृशामादर्शकान्तिषु कपोलस्थलीषु प्रतिबिम्बितं पानाभिनिवेशादासवेन सह पीतमाननगतमिव मधुचषकमलक्ष्यत। तासामासवपायिनीनाम् आमिषादप्यधिकरुचिविधायीनि बभूवुरसकलखण्डितान्याम्रकिसलयानि। तासामासवपायिनीनामसकलदृशां कपोलेन सह रागमुवाह हृदयम्; गत्या सह चस्खाल वचनम्; नीवीभिः सह विशश्लथे मानः; वपुषा सममघूर्णत नयनयुगम्। जाताङ्गसादाः,

सन्नवाचः, पानधौताधररागाः, समुत्थातुमसहाः श्वसत्यो मुक्तमुक्ता इव रेजिरे राजीवदृशः । स्फुरिताधरपल्लवमुल्लासित-नयनकमलमासवसुरभि मधुलिहां मधुचषकशङ्कामकुरुत वद-नमङ्गनानाम् । मधुमदनृत्तमाचरन्त्यश्चतुराभिनयचलितपा-णयो मधुरगीतयो वामलोचना मन्दानिलचलितसरसपल्लवा वाचालकोकिला वसन्तवनलता इव कस्य वा न बबन्धुरन्तः-करणानि ॥

एवमवनिपालो योगिजनसनाथेन युवतियूथेन निर्वर्तया-मास पूजां भुवनजनयित्र्याः ॥

ततो विन्ध्याटवीमतिलङ्घ्य कतिपयैः प्रयाणकैर्विषयमा-त्मीयमाससाद । तत्र विश्वविख्यातविभवाम्, विश्वाधिकस्य भीमनाथस्य परमेश्वरस्य निवासभूताम्, शिबिरभूमिमिव धर्मस्य, सप्तगोदावरीसलिलपरिवृततया कलियुगभयेन जलदु-र्गमध्यगतकृतयुगशङ्कां जनयन्तीम्, उत्सर्पिणीभिरुन्नतमरतक-गोपुरशिखरद्युतिभिः शैवालितमिवाम्बरसरिदम्बु दर्शयन्तीम्, शशधरहरिणस्य बालतृणधियमुपजनयन्तीम्, ऊर्ध्वविसारि-णा वैडूर्यसालमहसा गगनतलेऽपि गोदावरीस्रोतःसन्तान-मिव कल्पयन्तीम्, अनिलतरलैः केतनपटैरभ्यर्णहरहालाहल-तापमिव वीजयन्तीम्, आन्ध्रपुरन्ध्रिनीरन्ध्रकुचतटास्फालनो-

चलिततरङ्गताडिततटैर्निजपयसि जाम्बूनदाम्बुरुहसर्गविमुखस्य वेधसो निर्भत्सनबद्धान्भ्रूभङ्गानिव तरङ्गानुद्वहद्भिः सरोवरशतैः सनाथीकृतपरिसराम्, अविरलकालागरुधूपकर्बुराभिर्विषानलधूमधूसरशेषशरीरश्रियं बिभ्राणाभि. स्फटिकहर्म्यसंहतिभिरुपशोभिताम्, समुल्लसता चन्द्रकान्तवलभीश्रेणिमहसा माणिक्यकेलिगिरिजन्मना च मयूखजालेन रात्रिंदिवमपि कौमुदीबालातपकचाकचिकलहभ्रममुत्पादयन्तीम्, मदकलकोकिलकुहूदत्तसंज्ञपञ्चशरपाटच्चरलुण्ठ्यमानपथिकहृदयेन प्रसृमरकेतकीपरागपटवासपटलवासिताम्बरेण विततहरिचन्दनपाटीविटपपरिपाटीसमाटीकमानमधुकरमण्डलझंकारमुखरेण सालरसालतमालहिन्तालमालाबहुलेन कुहलीपरिमलहारिणा बालोद्यानवलयेन मण्डिताम्, अमरावतीमिव दर्शितानेकदेवालयाम्, अरण्यानीमिव अनेकसालाधिष्ठिताम्, करिणीमिव कलितशृङ्गारविभ्रमाम्, सत्कविकृतिमिव सदलंकृतिरमणीयाम्, अधोभुवनसंपदमिव सुतलशोभिनीम्, घर्मदिवसश्रियमिव तापसहितामाससाद दक्षारामपुरीम् ॥

यत्र सुभ्रुवां केशपक्षविपक्षस्य बहुलपक्षतमसास्तिरस्करणमिन्दोः प्रशंसायै; बिम्बाधरस्पर्धिनीनां विद्रुमलतानां कल्लोलकरताडनं कीर्तये समुद्रस्य; नयनसाधर्म्यवाञ्छिनां नलिनानां

प्रमीलनं प्रसिद्धये प्रदोषस्य; स्तनकलशसौभाग्यचोराणां चक्रवाकमिथुनानां चरणे बिसतन्तुनिगलवेल्लनं सरसां श्लाघायै; कोमलचरणतलसादृश्यवाञ्छिनां वल्लीपल्लवानां कठोरताकल्पनं ख्यातये घर्मस्य; सविलासगतिसाधर्म्यमानिनां मरालानां प्रोच्चाटनं प्रथायै प्रावृषः ॥

तत्र नृपतिर्दक्षोत्तमाङ्गपरश्वथायमानपाणिनखरम्, वीरभद्रसर्गविरिञ्चायमानललाटभागम्, विद्रुतमखमृगविदलनलीलामृगयुम्, छिन्नामरतत्तदवयवपुनरङ्कुरणभेषजायमानतत्कालप्रसादं भगवन्तं भीमेश्वरं प्रणनाम । तदनु भगवते महार्घाणि पट्टवस्त्राणि, महनीयानि मणिभूषणानि, श्लाघ्यगन्धानि चन्दनदारूणि, शशिकरशुचीनि चमरवालानि, द्रोणदुघा नैचिकीर्गाश्च, बहुशो दत्त्वा शिवालयान्निर्जगाम । ततः सकलनगरातिशायितत्पुरशोभालोकनकुतूहली परितो लम्बमानसौगन्धिकदामपरिमलभृति विततदुकूलवितानहारिणि भासुरमणिस्तम्भशतसंभृतरामणीयके पश्चिमद्वारसौधतले, सेवाञ्जलिदन्तुरशिरोभिरालोकशब्दमुखरैरनेकै राजन्यपुत्रैः परिवृतः क्षणमासाञ्चक्रे ॥

तस्मिन्समये समयज्ञः सततपरिपार्श्ववर्ती नर्मालापकुशलो विदूषकः सस्मितमिदं व्यजिज्ञपत्— "स्वामिन्, अहो

रमणीयतास्य नगरस्य । दृष्टिमितो ददातु देव. । भीमेश्वरसे-
वागतकैलासकुटुम्बविभ्रमं बध्नन्त्यमूः शरदिन्दुकान्तिधवलाः
सौधपङ्क्तयः । एते प्रबलपवनताडनविशीर्णगगननदीस्रोतः-
शकलशङ्काविधायिनो विभान्ति प्रालेयपिण्डपाण्डवः प्रासाद-
पङ्क्तिषु पताकापटाः । समुन्नतशिवालयगोपुरनिकरशिखराग्र-
घट्टनपतिताः सविद्युल्लताः सलिलधरा इव बध्नन्ति चेतो मध्य-
संचारिवामनयना महानीलमया मञ्चसंचयाः । एतस्य नग-
रस्य मरकतप्राकारलक्ष्मीं दधाति चक्षुःप्रियंभावुकं परिसरा-
रामरेखावलयम् । किंच एषा तु जगत्प्रसिद्धा तृतीयपुरुषार्थ-
जन्मभूमिः, निखिलजनयौवनफलनिर्वेशशाला, रागलताल-
वालमण्डली, धनिकधनलुण्टनकान्तारपदवी, रतिपतिरागरा-
ज्यप्रवर्तनास्थानमण्डपिका, गुरुकुलमनङ्गवेदाध्ययनस्य, प्रति-
भवनाङ्कणबालाशोकमूलविरचितरतिमदनरूपप्रतिमा, प्राग्द्वा-
रवेदिकाभित्तिलिखितचित्रमिथुनदर्शितानेककरणचित्रीयमाण-
जननयना, नानारङ्गवल्लीवेल्लितप्राङ्कणप्रदेशा, प्रतिभवनोपनीय-
माननवनवमधुकलशमधुरपरिमललहरितरलमधुकरपटलरुत-
मुखरा, सततसुरतप्रवृत्तवरयुवतिकरयुगचलितमणिवलयरणि-
तगुणितमणितवितीर्यमाणविटजननित्यकर्णातिथ्या, कश्यपर-
स्परकलहायमानवेश्यामातृजनपरुषभणितशतबधिरितपरिसरा,
नागरिकपीठमर्दविटविदूषकयूथविहितबहुविधपरिहासालापपे-

शलरथ्यान्तरा, अनेकयुवतिजनानीयमानसतारुण्यपोषमेषनि-
र्भरा, धानिकतरुणजनानीयमानसरसमलयजघुसृणमृगमदकुसु-
मामोदमेदस्विनी, सदनाङ्गणधरणितलविरचितमेषकुक्कुटकपिञ्ज-
लद्वन्द्वरणविलोकनकुतूहलभ्राम्यदविरलपामरजना, वेश्यावर-
स्यकलहायमानविशृङ्खलाहंकारशस्त्राशस्त्रिकथारटनवाचाटखे-
टचेटजना, गणिकाजनपठ्यमानगद्यपद्यचम्पुचाटुनाटकोदाह-
रणशतानुहरणपठनपटुपञ्जरगतशुकालापवाचाला, सहजधनो-
ल्लासपल्लवाधमारब्धाधरसुरतग्लहद्यूतकेलिकोलाहलाकुलिततो-
रणवेदिका, कुट्टिनीजनकुटिलाश्लीलप्रायवचननिशमनबद्धकुतु-
कक्कुविटसार्था, गृहीतकुसुमवसनताम्बूलाङ्गरागेण स्वयं दूतेन
तापसादिप्रच्छन्नकामुकलोकेनान्विष्यमाणपक्षद्वारा, तुङ्गहर्म्य-
शृङ्गनिहितगाङ्गेयकुम्भपिङ्गलिमलिप्तगगनवीथिभिरानिलतरङ्गि
तैरनङ्गध्वजपटैर्निरन्तरसुरतखिन्नाः सौधशायिनीर्वेश्या इव
वीजयन्ती, कामुकजनाकारणमिव कुर्वती, सर्वेशवाटसौभा-
ग्यमिव धून्वती, अनवरतचलितनवडोलाप्रेङ्खोलनव्याजेन
प्रकृतिचपलां स्वचित्तवृत्तिमिव दर्शयता बालिकाजनेन विरा-
जमाना, सततचलितसौभाग्यघण्टाक्वणितेन गृहे गृहे क्रिय-
माणं मदनदेवताराधनमहोत्सवमिव विवृण्वती, प्रतिभवनल-
क्ष्यमाणवातायननिवहतया स्वयमपि धनिकविटागमनप्रती-
क्षणार्थमुत्पादितानेकलोचनेव दृश्यमाना, सकालमेघपङ्क्तिरिव

कालागरुधूममण्डलैः, सदुग्धार्णववीचिरिव दुकूलध्वजपटैः, सताकारजनिरिव मौक्तिकहारमयूखपटलैः, सेन्द्रचापसहस्रेव विविधमणिभूषणमरीचिसंहतिभिः, परिचितचन्दनामोद-शिशिरा मलयगिरितटी भुजङ्गप्रचाराणाम्, सरसगणिकाधि-ष्ठिता विहारवनवीथी मदनाद्विपेन्द्रस्य, प्रसवपरिमलहारिणी मालिका मधुपकुलव्यामोहस्य, पातालगुहेव प्रकटितबहुभु-जङ्गभोगा, अलकेव धनदाधिष्ठिता, सुग्रीवपृतनेव सगवाक्षा, वसन्तवनवल्लीव पल्लवोल्लासिनी, प्रमथपरिषदिव भूतिधारिणी, सुधर्मेव महनीयाम्बरमणिवसुनिकरभूषिता, विविधयुवतिवि-भ्रमप्रभवा विराजते वेशवाटी ॥

अस्यां खलु चकास्ति समस्तजनसुखपरंपराप्रसूतिः, अन-वरतप्रसाधनपरा, विविधविलासपेशलतनुः, निरन्तरविधीय-माननवनवोत्सवा, वित्तमदमत्तचित्ताकर्षणकौशलव्यसानिनी, मिथ्यानुरागनटननर्तकी, लावण्यपण्यविक्रयजङ्गमविपणिः, इ-न्द्रियहरिणबन्धनवागुरा, कन्दर्पघर्मतापप्रशमनप्रपा, मोहन-चूर्णेन मदिरारसेन योगदीपिकामहसा महेन्द्रजालपिञ्छिका-पवनेन विषवल्लीकुड्मलान्तराकाशेन च पञ्चशरविरिञ्चिना प्रपञ्चविमोहनाय पाञ्चभौतिकी विनिर्मिता, कङ्कणझणात्का-रकटाक्षावलोकनस्मितकरमूलकुचकलशप्रदर्शनादिना कृत्रिम-

विलासेन पामरविटानाकुलयन्ती, श्रोत्रियसुखप्राप्तवित्तपितृवित्तमत्तवृद्धबालविरूपपामराहङ्कारितापसग्राम्यादिकामुकानां धनमखिलमात्मीयमेव मन्यमाना, कस्यापि विटजनस्य पुरतो निगूढाभिलाषं यत्किंचिदपि कथाप्रसङ्गेन महद्वस्तु प्रस्तुत्य नितान्तमनुरागोन्मत्तेन तेनार्प्यमाणं धनमनिच्छन्तीव सप्रतिषेधमेव गृह्णन्ती, मन्दहसितभ्रूवल्लरीवेल्लनाक्षिविक्षेपादिभिर्विलासैः प्रथममावर्ज्य यूनस्ततः कतिपयदिवसभोगवैचित्र्या रक्तेव रञ्जयित्वा निःस्वतां प्रापय्य तानलमल्लकमात्रशेषान्मात्रादिभिर्निष्कासयन्ती, स्वर्णकारक्षौरिकरजकसौचिकतन्तुवायापणिकमद्याहारकमांसिकमालाकारप्रभृतीन्प्रयोजनपतया निगूढं रमयित्वापि 'नाहमकुलीनं स्पृशामि' इति मिथ्यामहिमानमात्मन्यारोपयन्ती, कस्यापि धनवतो वशे वर्तमानापि जनक इति भ्रातेति जामातेति श्वशुर इति गुरुरिति पुरोहित इति वैद्य इति वयस्य इति परस्परमविज्ञातानन्यानपि रमयन्ती, समुल्लासिना धनिकलोकेन प्रेष्यमाणाननुसधानविद्याममर्मवेदिनश्चेटकानपि संभोगप्रदानेन प्रीणयन्ती, कस्मिंश्चन वासभवनमधिवसत्यपि सापदेशगमना प्रधानगृहपश्चाद्भागबन्धुमन्दिरप्रातिवेशिनीसदनदुर्गानिलयादिषु स्थानेष्वन्यमन्यं तर्पयन्ती, समुल्लासिनि पल्लवजने रिरंसमाणे सत्यपि बहुनरभुक्ततया रन्तुमक्षमा द्यूतगानकथाशुकालापप्रण-

यकलहादिना व्याजेन कालं नयन्ती, कस्यचित्करावलम्बनम् एकेन सह संलापम्, अन्यस्य विलोकनम् अपरस्मै दूतिकाप्रेषणम् इतरस्य संदेशश्रवणम् अन्यं प्रति मन्दस्मितं चानुसंधाय युगपदेव सर्वानावर्जयन्ती, अभिजातमप्यनालोच्य तरुणमप्यविगणय्य सुन्दरमप्यनवलोक्य सरसमप्यनादृत्य पटुतरमप्यचिन्तयित्वा शूरमप्यनवेक्ष्य स्निग्धमप्यपरिगृह्य कृतोपकारमप्यविचार्य धनाशया यं कंचन निकृष्टमपि धनिकमेवाराधयन्ती, अपहृतधनानामपवाहनसमयेष्वहृदयरुदितेऽप्यश्रु पातयन्ती, तदैवाकारितानामनागमनव्यपदेशं कल्पयन्ती, निकृष्टजनादात्तमस्तोकं वस्तुजातं प्रथीयसि जने विन्यस्य ख्यापयन्ती, पल्लवानां परस्परविरोधमुत्पाद्य स्वप्रयोजनं घटयन्ती, एकस्य ताम्बूलोच्छिष्टम् इतरस्य परिवीतवसनम् अन्यस्य कचभरमालिकाम् अपरस्य परिष्करणानि च समादाय परेभ्यः पल्लवेभ्यः स्वयमर्पयित्वा मन्दमन्तर्हसन्ती, केशेषु स्रग्धरा विलासेषु ललिता वीक्षणेषु हरिणी वचसि मञ्जुभाषिणी रूपे रुचिरा स्वरे मत्तकोकिला नितम्बबिम्बे पृथ्वी चैवं संदर्शितानेकसुवृत्तापि दुर्वृत्तावलम्बिनी, काञ्चीकलकलकङ्कणझणात्कारमणिवलयमञ्जीरशिञ्जितैः सदा विटजनाकारणमिव कुर्वती, शीतलानुलेपनसमयजृम्भितेन रोमाञ्चेन कमपि कामिनं प्रति स्वहृदयानिरोधनाय कण्टकवृतिमिव कल्पयन्ती,

सकलावयवविन्यस्तशस्तमुक्तामयभूषणभुवा शरदिन्दुकान्तिसहोदरेणालोकेन परीतावयवतया निकृष्टकामुकपरिभोगदूषितमात्मानममृतपूरेणेव प्रक्षालयन्ती, अनवरतलीलालोकनखिन्नां दृष्टिमिव वीजयतश्चलान्कुटिलाग्रान्कुन्तलनिकरानखिलयुवहृदयबन्धनवागुरावलयानीव कलयन्ती, स्तनतटस्रस्तोत्तरीयप्रतिविधानसमयेषु हारतरलरत्नप्रतिबिम्बितपाणितया विश्वविटजनधनजिघृक्षुणा करद्वयमात्रासंतुष्टेन हृदयेनोत्पाद्यमानं तृतीयं करमिव दर्शयन्ती, नखमयूखजालजटिलाभिर्मणिवलयकिरणरेखाभिः कामुकजनाकर्षणकण्ठपाशानिव करेण दधाना, सर्वाङ्गीणचन्दनानुलेपनव्याजेन विविधविटविधीयमाननखमुखविलेखनदन्तचुम्बनानामसहनतया कवचमिव धारयन्ती, दृश्यमानकुसुमनिचयं धम्मिल्लभारमनवरतममुक्तपार्श्वस्थितेर्भुवनवशीकरणसुहृदो युवजनान्प्रहरतः प्रसवबाणस्य सबाणमक्षयं तूणीरमिव दधाना, अधोमुखविसर्पिणा नासालंकरणमौक्तिकालोकेन बहुविटनिःशेषपीतसारस्य बिम्बाधरदलस्यामृतपूरमिव प्रक्षिपन्ती, कपोलतलगतं कर्णावतंसकमलप्रतिबिम्बं चक्षुषोर्निशाजागरणविद्याध्ययनार्थमागतमन्तिकस्थितं पद्ममिव वहन्ती, विषवल्लीव सेव्यमाना मोहमापादयन्ती, पिशाचीव भूतिहस्तेन पुरुषेण क्रियमाणानि कचग्रहताडनशतान्यनुभवन्ती, छायेव रुचिभर्तारमपि वसुविहीनं विमुच्य परा-

चीनतामवलम्बमाना, संध्येव प्रारम्भदर्शितरागा तामस भावमवसाने दधाना, इन्द्रजालपिञ्छिकेव असतो भावान्प्रकाश्य भुवनं व्यामोहयन्ती, गुडालिप्तशिलेव अन्तः कठिनापि बाह्ये रसलेशमावहन्ती, रतिरिव प्रद्युम्नानुरक्ता, भूमिरिव भुजंगभोगसङ्गिनी, महार्णववीचिरिव मणितरणं विवृण्वती, स्फटिकशिलेव प्रतिपुरुषरुचिं दधाना, जलूकेव रक्ताकर्षिणी, दण्डकेव सचित्रकूटा, कान्तारस्थलीव दृश्यमानमयूरपदशशप्लुता, चार्वाकवृत्तिरिव जातिभेदानपेक्षिणी, शरदिव खण्डाभ्रधारिणी, पयोनिधिवेलेव प्रवालमणिभूषिता, प्रव्रज्येव आत्मानुरक्तानां कौपीनदायिनी, कमलिनीवानुभूतकरिकरक्षोभा, नाविकीव कृतजनप्रतारणा, वारणगण्डस्थलीव बिन्दुमती, समरोद्यतेव तीक्ष्णनखरा, विवेकिनोऽपि जडान् व्रतिनोऽपि कामुकान् धनिकानपि निर्धनान् लुब्धानपि प्रदातॄन् शान्तानपि साहसिकान् मुग्धानपि विदग्धान् प्रकृतिस्थानप्युन्मत्तान् धीरानपि चञ्चलान् चक्षुष्मतोऽप्यन्धान् श्रुतिमतोऽपि बधिरान् आचरन्ती, आवासस्थली चोराणाम्, विश्रामभूमिर्धूर्तानाम्, आश्रयभूराततायिनाम्, रङ्गमण्डपिका मधुपायिनाम्, आकरः कपटानाम्, खनिरनृतानाम्, आलवालमनाचाराणाम्, निवासस्थानमकार्याणाम्, वञ्चकानामपि वञ्चयित्री, चोराणामपि चोरयित्री,

प्रलोभकानामपि प्रलोभयित्री, भ्रामकाणामपि भ्रामयित्री, सकपटापि निष्कपटलालसा, श्यामापि वसुमदागमनकाङ्क्षिणी, रुचिराप्यवृत्तश्लाघ्या, दर्शितेन्द्राणीविलासापि नवासवसक्ता, कृत्रिमजन्मभूमिः, ख्यातिगरीयसी गणिकाजातिः ॥

कुपितमृडनिटालदृगनलनिर्दग्धमकरकेतुमङ्कुरयन्ति यस्याः कलितविलासाः कटाक्षविक्षेपाः । यस्यास्तु निकृष्टविटस्पर्शदुरितापनिनीषया भृगुपतनमाचरन्तीव स्तनशिखरमनुक्षणमारुह्य पतन्ति सद्वृत्तशुद्धानि मुक्ताफलानि ॥

यस्याः खलु कुटिलहृदया, कुपितजरठमर्कटीदेश्या, वेश्याजनपुण्ड्रेक्षुवाटकण्टकवृतिः, निपतितकुचचर्मभस्त्रिकोपरिदृश्यमानदरमसृणपुराणनखपदा, शुष्कहासकुशला, निष्कपरवशतया मदनातुरविटजनकृतनातिनुतिशतैरप्यसाध्यसंरम्भा, अनेकतरुणधनहरणपातककलुषमिव किणकलङ्कितं हृदयमुद्वहन्ती, जरावल्लीपुल्लस्तबकानुकारिणं पलितसितं केशमनवरतमपि नीलीरसेन रञ्जयन्ती, अकारणनिष्कासनकलहकुपितबहुविधकामुककठिनकरतलताडनकिणकलङ्कितकपोलस्थला, विश्वविटधनहरणविहितविविधाङ्गिकव्यापारविकलसकलावयवा, प्रतिकलविरच्यमानप्रतिवेशिनीकलहकुण्ठकण्ठस्वना, धनिकधनहरणरेखाभिरिव प्रत्यङ्गतरङ्गिताभिर्वलिभिर्जर्जरिताकृतिः,

अनुदिनमविरलमणिकनकवरवसनमयबहुधनवितरणपरधनि-कविटजनभृशतरबहुमतिकरणनिपुणा, स्वदुहितुरपत्यं त्वदुत्पन्नम् इदं दीयतामेतस्य भूषणजातमिति प्रतिपुरुषं निवेद्य निवेद्य गम्यजनादलघु धनमाच्छिन्दती, धनार्जनकर्मघर्मपरिभ्रमणवात्या, दुहितृगुणभूषणद्योतनश्वदंष्ट्रा, उपमा कालरात्रेः, उदाहरणममङ्गलानाम्, मातृका पिशाचीसर्गस्य, मनोरथसिद्धिर्वैरूप्यस्य, जङ्गममण्डपिका दौःशील्यस्य, वैतण्डिकी मदनसिद्धान्तस्य, वानरी चापलगुणस्य, अर्गला वेशमार्गस्य, अनभ्राशनिः कामुकमनोरथानाम्, उपदेष्ट्री कपटतन्त्रस्य, व्याख्यात्री कपटशास्त्रस्य, वेत्रलता निर्धननिवारणस्य, पाटच्चरी धनिकधनस्य, संमार्जनी सद्गुणप्रमृष्टेः, अकालपलितोद्गतिर्युवजनकेशग्रहणस्य, पेटिका किणमणिधारणस्य, नटी वैकृतनाटकस्य, निशाचरीव मायाबहुला, घर्मसमयमरुदाहतिरिव पल्लवशोषिणी, राहुजिह्वेव सकलचन्द्रग्राहिणी, भुजङ्गीव कुटिलवर्तना, श्वपुच्छलेखेव न कदाप्यार्जवमवलम्बमाना, नकुलीव भुजङ्गकुलभीषणा, विविधविटपरिषदातङ्कजननी जननी ॥

यस्याः खलु कूटव्यापारलटहा, विटचेटीसंघटनविघटनकर्ममर्मज्ञा, प्रकटापट्टकुचतटलिखितविकटनखपत्रलिपिपद्धतिः कामुकाह्वानपत्रिकेव दृश्यमाना, निर्मितनिर्माल्यगर्भधम्मिल्ला,

परिवीतवसनधारिणी, कामिनीकामुकदत्तताम्बूलाङ्गरागपरिष्कृता, बहुविधकपटभणितिशतप्रबन्धकल्पनया शिलाकठिनमपि हृदयं द्रावयन्ती, स्मरपरवशविटजनविरचितचाटुवचनशतवाचाटपरिसरा, समूढोच्छूनकबिन्दुप्रवालमणिमालाबिन्दुमालाप्रभृतीनि दन्तपदानि समुचितस्थानेषु धारयन्ती, परस्परकुपितविटमिथुनप्रसादनविद्याविदग्धा, रम्भानलकूबरादिवदन्योन्यानुरक्तहृदयानां मिथुनानां विरक्ततापादनविदुषी, मृगीमुग्धकुलाङ्गनारासिकजनासुखावहभयदायिनी, पराङ्गनारतिकालकलापवैकल्यादनङ्गराद्धान्तिकैरबहुमन्यमाना, वेशविलासिनीविविधविलासपेशला, अनितरवधूसाधारणसुरतसौभाग्या, विविधकरणोपचारकुशला, नायकहृदयवेदिनी, 'तदीयमेव मदनसर्वस्वम् । अनया पुनरिह जगति तृतीयपुरुषार्थस्य भवति साफल्यम्' इति संलप्य तस्यामेव समधिकधनगर्वान्सर्वानावर्जयन्ती, पामरविटप्रशस्यविभ्रमा, स्वकार्यमात्रव्यवसायिनी, स्वामिनीपरिगृहीतान्स्वयमपि संभोगप्रदानेन प्रीणयन्ती, उपाध्यायी कपटशास्त्राणाम्, संधानकरणी मिथुनानाम्, अध्यापिका कन्दर्पनिगमानाम्, आचार्या कामुकाकर्षणविद्यानाम्, उपदेष्ट्री स्मरबन्धकरणानाम्, डिण्डिमघोषणा सुरतस्य, शुल्कशाला बहुपुरुषव्यवहारस्य, कादम्बिनी कामपुरुषार्थकन्दलोल्लासस्य, शैलूषी कामुकेच्छा-

निरुपमसंभोगताण्डवस्य, क्लीबस्यापि पुंस्त्वमुत्पादयन्ती, नीरसस्यापि रसं जनयन्ती, निर्विकारस्यापि विकारमापादयन्ती, कठिनस्यापि मार्दवं कल्पयन्ती, सरसीव सतामरसा, कालिकेव निरन्तरभ्रमणशीला, डोलेव गमनागमनसक्ता, श्लिष्टशब्दस्थितिरिव उभयत्रार्थग्राहिणी, सृगालिकेव वञ्चनपरा, शुनकीव परोच्छिष्टलालसा, आहितुण्डिकवृत्तिरिव बहुभुजङ्गसंपादनचतुरा, शम्बरलीलेव मायाविनी, काकदृष्टिरिव कलितोभयप्रयोजना, कुटिलहृदया कुट्टिनीसंहतिः ॥"

इति विदूषकस्य परिहासप्रायं वचनमाकर्ण्य, मन्दस्मितमधुरवदनेन्दुरवनिपतिः पट्टवस्त्रपरिष्करणादि पारितोषिकं प्रदाय तस्मै, परस्परास्फालितनरपतिसहस्रभुजमणिकेयूरनिनदमुखरितदिगन्तरम् अतिसंमर्दकुपितवेत्रिकुलकरकनकवेत्रयष्टिघट्टनक्वणितसामन्तचक्रकनककिरीटमण्डलमुत्थाय, आहितश्रृङ्गारमाहवकोलाहलमधिरुह्य गन्धकारिणम्, अखिलपरिपन्थिसुन्दरीमुखकमलमृगाङ्कमण्डलेन स्वकुलककुदेनातपत्रेण निवार्यमाणातपः, सविधविधूयमानधवलचामरपवननर्तितकर्णपल्लवः, वन्दिभिरन्तिकवर्तिभिः कलमधुरस्वरं पठ्यमानाः स्वभुजविजयशंसिनीर्भोगावलीः पुलकितकपोलमाकर्णयन्, अलंकृतया पुनर्वीथ्या शिबिरमयासीत् ॥

तत्र निवसन्, अतिमनोहराणि गाणिक्यस्य माणिक्यभूषणरवमुखराणि मधुरगीतानुबन्धीनि नृत्तानि निरीक्षमाणो निनाय कानिचिद्दिनानि ॥

तदनु कूलंकषप्रवाहाम्, कुमुदकुवलयकल्हारपरिमलमेदुराम्, राघवशापाभिज्ञजरच्चक्रवाकमिथुनसेविताम्, त्र्यम्बकगिरिसंभवाम्, जलदेवताविहरणडोलाभिर्नरकनगरार्गलाभिः स्वर्गप्रासादसोपानपङ्क्तिभिर्निःश्रेयसाधिरोहणनिःश्रेणिकाभिश्चिरजन्मकल्मषपटीकर्करीभिः समीरणसूत्रधारानुकूलनर्तननटीभिर्नवनवफेननिर्मोकत्यागकाकोदरीभिः संततशीकरविमुक्तिगन्धकरिणीभिः संतापहारिणीभिर्लहरीभिरान्दोलिताम्, अन्तर्गतेन सान्द्रतटारामप्रतिबिम्बेन निरन्तरविसारिणा फेननिकुरुम्बेण च भूयोऽपि जलनिधिनिवेशनार्थममृतहालाहलाविव कलयन्तीम्, प्रबलकलिघर्मशुष्के धर्मद्रुमे पुनरपि तदङ्कुरणालवालवलयानीवावर्तमण्डलानि धारयन्तीम्, तीरसिकतासु केलितरलसारसीचरणनखमुखरेखाभिर्धर्मसंस्थापनशासनाक्षराणीव तन्वतीम्, माधवमृदितमधुकैटभरुधिरानुबन्धदुर्गन्धिहृदयस्य जलधेरधिवासनार्थमिव सलिलविसारीणि तटरुहपुष्पजालानि नयन्तीम्, बहुदेशातिलङ्घनश्रमनिःश्वासितमिव तरङ्गानिलं विसृजन्तीम्, कलिकल्म-

षनिबर्हणपटहघोषणामिव कल्लोलास्फालनरसितेन कल्पयन्तीम्, खण्डितकमलनालतन्तुवेल्लितचरणयुगलान्यान्ध्रराजसुन्दरीसविभ्रमगतिचातुरीचौर्यापराधदण्डसकलितशृङ्खलानीव राजहंसमिथुनानि विवृण्वतीम्, निजाम्भसि कुमुदवनमुकुलनापराधबन्दीकृतमनुकलतरङ्गकरताडनवेदनयेव वेपमानमम्भःप्रतिबिम्बितमहिमकरबिम्बं विभावयन्तीम्, पङ्कजवनीपर्णपटलच्छायातिमिरिताभोगेन जलमार्गेण रमणानभिसरन्तीनां जलमानुषसुदृशां संकेतभवनायमानैरुपतटवेतसनिकुञ्जैरुद्भासिताम्, दुष्कर्मघर्मप्रशमनीं कादम्बिनीम्, उन्नतपयोधरां विलासवतीम्, महाभूभृत्प्रभवां शिवाम्, वृद्धामिव प्रकटितबहुवयःप्रचाराम्, शंकरवसतिमिव शैवलासिताम्, भारतरणभूमिमिव धार्तराष्ट्रपक्षविक्षोभकलकलाम्, महावीरचित्तवृत्तिमिव सिन्धुराजसक्ताम्, वसिष्ठगौतमनिषेवितां भगवतीं गोदावरीमाससाद ॥

यस्यां खलु सकृदम्भसि निमज्जनेन जन्तूनां चिरजन्मकल्मषमलमपि क्षाल्यते । प्रायेण चिरकालवारुणीपरिशीलनांहःपरिजिहीर्षयेव यस्याः पावनं सलिलमापिबति पाथोनिधिः ॥

ततस्तामुत्तीर्य, मथ्यमानकलशजलनिधिकलकलगम्भीरनादेन महता सैन्येन परिवृतो निजपुराभ्याशमभ्याययौ ॥

अनन्तरम् अन्तिकोपनीतम्, अतिबहुलहिमपिण्डपाण्डुरत्विषम् अमृतफेनधवलिततनुमिव शतमखहयम्, अत्युन्नतप्रमाणतया कैलासमिव तुरगरूपेण परिणतम्, शरदभ्रमिवाश्वतामुपगतम्, कनकखलीनस्खलनजन्मना लालाजलभुवा फेनस्तबकेन क्षणगगनलङ्घनजवजडजङ्घानिव रवितुरगानपहसन्तम्, अतितेजस्वितया निजजवनिरोधदोषनिरर्गलनिःसृतेन निःश्वासमरुता प्रज्वलयन्तमिव भर्तुः प्रतापानलम्, आत्मीयगतिसाहाय्यकाय मारुतीं सृष्टिमिव रचयन्तम्, कनकखलीनपर्यन्तखचितमरतकमणिकिरणनिकुरुम्बकरम्बितसृक्कतया गृहीततरुणदूर्वाकिसलयकवलमिवोपलक्ष्यमाणम्, अजवनस्य पवनस्य आशुगाभिधानयोगेन दूयमानमिव प्रचलितप्रोथपुटेन मुखेन मुहुर्मुहुर्विमुक्तशूत्कारम्, अनुकलमवनमता चोन्नमता च मुखेन स्वामिनः प्रणामपौनःपुन्यमिव रचयन्तम्, अतिगम्भीरेण नगरप्रवेशमङ्गलपटहायमानेन हेषारवेण पूरितभुवनरन्ध्रम्, रभसगतिषु मानसीं गतिमतिवर्तमानम्, मण्डलभ्रमिषु वात्याविहृतिमिव अलातचक्रभ्रान्तिमिव दर्शयन्तम्, मथ्यमानमहार्णवावर्तवृत्तभ्रममुच्चैःश्रवसमिव विडम्बयन्तम्, उपरिप्लुतैर्गरुडोल्लङ्घनशिक्षामिवाभ्यस्यन्तम्, झटिति गतिनिवृत्तिषु बिलगामिभुजगमुखविवर्तनचातुरीमिव विवृण्वन्तम्, अविस्तीर्णोरस्कम्, आयतकन्धरम्, अतिस्थूलजघनभागम्,

अनुत्कटकर्णकोशम्, आम्रफलसदृशाण्डम्, आलोलवालपल्लवम्, अतिकठोरखुरमण्डलम्, आयतनिर्मांसमुखम्, परिचितनववीथीविहारवैचित्र्यम, पञ्चसु धारास्वपि प्रकटितशिक्षाप्रागल्भ्यम्, हेरम्बमिव सदाखुरचितगतिम्, गोष्ठीबन्धमिव मुखरकविकान्तम्, योगिनमिव जन्यहितम्, परमेश्वरमिव भस्मधवलविग्रहम्, जनार्दनमिव धृतदेवमणिम्, पयोमुचमिव प्रकटितधारापतनम्, आबद्धकनकपर्याणम्, अखिलभुवनैकरत्नमश्ववर्यमारुरोह ॥

ततः परिसरवर्तिभिरुत्तुङ्गतुरङ्गमाधिरूढैरपरिमितरत्नाभरणभूषितैरनेकै राजकुमारैरनुक्षणक्रियमाणजयजीवशब्दः, कनककुम्भमुखोज्झितहिमजलशमितपरागाम्, उल्लासितमणितोरणसनाथाम्, आबद्धकेतननिकरालंकृतराजमार्गाम्, अविरतप्रहतमङ्गलवाद्यघोषमुखराम्, उज्जृम्भितकालागरुधूपमण्डलाम्, आनन्दनृत्तचलितवारयुवतिमणिभूषणझणात्कारमुखरामात्मीयां पुरीमाससाद ॥

दर्शनकुतूहलिनीभिः सौधशिखराधिरूढाभिरवशहृदयाभिः पौरयुवतिभिर्विस्मयस्तिमिततारकैर्निमेषनिःस्पृहैर्लोचनाञ्जलिभिर्निर्भरनिपीयमानकान्तिपूरः, प्रतीहारवर्गपरुषहुंकारभयपलायितैर्दूरतः स्थितैश्चिरदर्शनसंजातकौतुकैः पौरजनैः प्रणम्य-

मानः, विहितपरिष्कारम्, आहितमङ्गलोपचारमहनीयम्, अविरलरत्नराशिप्रभाभासुरम्, उल्लसितकर्पूरदीपकलिकाकलापम्, ऐश्वर्यसंपूर्णमात्मभवनमाससाद ॥

ततः समरगृहीतान्पार्थिवांश्चिरविरहितावरोधाननुकम्प्य, पुनरपि संपदा संयोज्य, स्वपदगामिनश्चक्रे । असौ पुनरेकनगरनिर्विशेषमशेषमवन् अवनिचक्रम्, शशितपनकिरणागोचरं चक्रवालगिरेरपरमपि भागमवदातयन् यशोभिः, अश्रान्तज्वलितेन निर्वासितपरिपन्थिनृपपतङ्गप्रचयेन प्रतापप्रदीपेन भासयन्भुवनभवनोदरम्, अनवरतपातितैर्दानाम्बुभिः परुषकलियुगधर्मशोषितं धर्मद्रुममाह्लादयन्, अनुभावपराक्रमाभ्यां जगति दैवजपौरुषोपप्लवं ग्लपयन्, निजकुलककुदेनैकेनातपत्रेण छायावतीः सकलाः प्रजाः वितन्वन्, स्वचरितेन पुण्येन कुनृपतिसंपर्कदूषितां पावयन्पृथिवीम्, गान्धर्वविद्यापारदृश्वनां विश्वावसुनिभानां गायकानां निरवद्यवीणातोद्यनिनदानुसृतानि अमृतरसस्यन्दीनि गीतानि निर्विशन्, अनुपमलावण्यसाराभिरनुकृतलक्ष्मीविभ्रमाभिरङ्गनाभिः सफलयन्यौवनम्, सरसकविकाव्यश्रवणभूषणेन कर्णौ प्रतिदिनमलंकुर्वन्, आनन्दस्य परां कोटिमवाप्य सर्वोत्कर्षेण वर्तमानः, साक्षाल्लक्ष्मीसमुच्चार्यमाणजयशब्दः, विश्वविश्वंभरापालमौलिमालामकर-

न्दसुरभितचरणारविन्दो जयति विश्वाधिकविभवो वेमभू-
पालः ॥

प्रतिकविभेदनबाणः कवितातरुगहनविहरणमयूरः ।
सहृदयलोकसुबन्धुर्जयति श्रीभट्टबाणकविराजः ॥

जयति कविभट्टबाणे दधाति कविंमन्यभावमन्येऽपि ।
प्रद्योतयति रवौ द्यां खद्योताख्या न किंनु कीटमणेः ॥

सुगुणालंकृतिसुभगा फणितिरियं भट्टबाण भवदीया ।
अधरयति विधुतनखमुखमुखरितवीणानिनादमाधुर्यम् ॥

गाथास्ताथागता वो दधतु वितथतां तार्किकास्तत्त्वविद्भिः
सत्रा सत्रासमाध्वं फणिभणितिजुषो वः कृतं प्रक्रियाभिः ।
भूम्नां साहित्यसीम्नामधिभुवि भुवने वामने भट्टबाणे
दीव्यत्यस्मिन्कवीन्द्रे जहित जहित भोः कद्वदा विद्वदास्थाम् ॥

इति श्रीगद्यकविसार्वभौमस्य वत्सकुलतिलकस्य
महाकवेरभिनवभट्टबाणस्य कृतौ
**श्रीवेमभूपालचरिते**
चतुर्थोच्छ्वासः ॥



# NOTES.

*N B. The numerical figures refer to the number of the pages in the Text.*

१. **सौभाग्यमिति** । जगतां सौभाग्य जगत्सौभाग्यदायिनी ।

२. **काव्यमिति** । वर्णाः अक्षराणि, वर्णः तारतम्यहेतुरुत्कर्षविशेषश्च ॥

**भुजगीति** । नरेन्द्रः राजा, विषवैद्यश्च ॥

३. **पुरेति** । समानः नाभिः प्रधानपुरुषो यस्य सनाभिः दायादः । जाङ्गलिकः विषवैद्यः ॥

**स इति** । मिथुनभावेन दांपत्येन साहित्येन च । स्वजायां स्वस्य पत्नीम्, स्वजः आत्मना जातः आयः धनागमो यस्यास्तां च । विलिखितं कीलितम्, पत्रालीपरिष्कृतं च । अधि अधिकानि करणानि इन्द्रियाणि आलिङ्गनभेदा वा, अधिकानि रणानि युद्धानि च । आतपत्रादीनि रेखारूपाणि । महिमा माहात्म्यम्, बृहदाकारत्वं च । विक्रमः पराक्रमः, पादविक्षेपश्च । बलिराजश्रियं बलिनो ये राजानः तेषां श्रियम्, बलिचक्रवर्तिनो राजश्रियं च । नरकानि नराणां शिरांसि, नरकाः निरयाश्च । सौकर्येण अक्लेशेन, वराहत्वेन च । हिरण्य स्वर्णम्, कशिपु अन्नाच्छादने, क्षेत्राणि केदारादीनि, तेषां प्रदानं वितरणम् ; पक्षे हिरण्यकशिपुर्नाम कश्चिदसुरः, तस्य क्षेत्रं शरीरं तस्य

प्रदानं प्रकर्षेण विदारणम् । सुमनसः देवाः, विद्वांसश्च । स्वस्थान् स्वः स्वर्गे तिष्ठन्तीति तादृशान्, सुखं वर्तमानाश्च । दाशरथिः श्रीरामभद्रः, दाशाः किरातविशेषाः रथिनश्च । अलं कापतीति च्छेदः । कापतयः ईषत्पतयः कुत्सिता राजानः इति यावत् । कबन्धानि अपमूर्धकलेबराणि । पक्षे लङ्कापतिः रावणः, खरः तन्नमा राक्षसः, कबन्धः दनुकबन्धः । धरणिसंभवां भूमेरुत्पन्नाम्, भूमिसुतां च । श्रियं संपदम्, लक्ष्मीं च 'राघवत्वे ..' इत्युक्तेः । मधुराङ्गनाः मधुराः रुच्याः सुन्दर्य इति यावत्, तादृश्यः स्त्रियः ; पक्षे मधुरानगररमण्यः । कुवलयस्य भूमण्डलस्य आ समन्तात् पीडा क्षपिता येन तथोक्तः ; पक्षे कुवलयापीडो नाम कंसस्य कश्चित् गजः । बलः बलरामः, बलं शक्तिः सैन्यं वा ॥

४. **तत्रेति** । राजवंशाः वेणुश्रेष्ठाः, राज्ञां कुलानि च । कूलमुद्वहेन समग्रव्यासेन 'उदिकूले रुजिवहोः' इति खश् । अनेकपानां द्विपानां विक्रान्तिः पराक्रमः, भूभृत्पक्षः राज्ञां पक्षः । पक्षे अनेकाः याः पवीनां वज्राणां क्रान्तयः ताभिः क्षपिताः भूभृतां पर्वतानां पक्षाः गरुतो येन तथोक्तः । सत्यं व्रतं च सत्ये व्रतं वा । पक्षे सत्यव्रतो नाम हरिश्चन्द्रपिता त्रिशङ्कुः । कृशान् दीनान् अनुतेजयति तेजस्विनः करोति पोषयतीति यावत् तादृशः ; पक्षे कृशानुः अग्निः ॥

**यस्येति** । तरवारिः कृपाणः, धारा अग्रं तस्य सारः ; पक्षे विमलतराणां वारीणां धाराणां आसारः संपातः । पार्थिवानां

क्षत्रियाणां रजोभ्रान्तयः रजोगुणजन्याः भ्रमाः; पक्षे पार्थिवानां भौमाना रजसां परागाणां भ्रान्तयः वलनानि ॥

५. **तेनेति** । कर्णेजपाः पिशुनाः तत्सदृशा इति यावत् । शालिप्रभृतयो धान्यविशेषाः । चिक्रोडाः मूषकाकारा जन्तुविशेषाः, येषाम् 'अणिप्पिळ्ळै' इति भाषा । सारणी अल्पा जलवाहिनी । गञ्जा मदिरागृहम् । खञ्जन्तः स्खलन्तः विफला इति यावत् । परूंषि ग्रन्थयः । ह्रीताः लज्जावन्तः । गुलुच्छाः स्तबकाः । उर्वरा सर्वसस्याढ्या भूमिः । हालिकाः हलं वहन्तः कृषीवलाः । 'हलसीराट्ठक्' । अनणकाः अनल्पाः चणकाः धान्यविशेषाः तैः वित्तानि अनणकचणकचणानि तैः । तैलीनानि तिलानां भवनानि क्षेत्राणि । सीता लाङ्गलपद्धतिः, जनकजा च । जाङ्गलक्षेत्राणि क्षेत्रविशेषाः । तल्लक्षणं यथा—'स्वल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः । स ज्ञेयो लाङ्गलो देशो बहुधान्यादिसंयुतः' इति । कालिका मेघपङ्क्तिः । विष्वक्सेनः विष्णुः । जूर्तिं ज्वरम् । औपवाह्यशाक्वरः वाहनवृषभः । विनीयमानः शिक्ष्यमाणः । उच्चारितर्चेनेत्यत्र 'ऋक्पूः...' इति समासान्तः । अनूचानः साङ्गवेदाध्यायी । उर्वरा सस्यसमृद्धा भूमिः; पक्षे उरूणि अराणि चक्रमध्यस्थिता दण्डविशेषाः । निरवधयः कासाराः सरस्यः; पक्षे निरवधिका आसाराः । सज्जनपक्षे अनेकधा अन्येति च्छेदः । लोहप्रभवभुवः खनयः । पक्षे बहुलस्य ऊहस्य प्रभवाय बहुलेन ऊहेन संजाताय वा भूम्ने हितः । भद्राः जात्या गजाः, अश्वाश्च । भद्राश्वो नाम कश्चन जम्बूद्वीपनववर्षान्तर्गतवर्षविशेषः । धेनुकाः करिण्यः, नवप्रसूता गावश्च ॥

१०. **यत्रेति**। वरणः प्राकारः। शम्भली कुट्टनी। सर्वदा अरराणि कवाटानि। पक्षे सर्वेषु दारेषु रचिता रुचिः येषु तानि तैः। वलीकानि पटलप्रान्ताः, वल्यः त्रिवली। सृपाटिका चञ्चूः। गन्धसाराः चन्दनवृक्षाः। सगन्धाः संबन्धिनो जनाः। विटपानां आलिः, विटानां पालिः पङ्क्तिश्च। देववल्लभाः केसराः। अधिकैः पिकैः चितेन। पक्षे कपिकेत्यत्र स्वार्थे कः। वलीमुखाः वानराः, पक्षे सतां आवल्याः मुखरतायाः प्रसङ्गस्य। कलितरसालसत्विषेत्येव पाठः। कलिता रसाला सती त्विट् यस्य तेन। पक्षे कलितरसा कलिबलेन अलसन्ती त्विट् यस्य तेन। भ्रमराः भृङ्गाः, भ्रमरकाः अलकाश्च। तिलकद्रुः तिलकवृक्षः। पक्षे तिलकद्रुर्नाम वार्धकसूचको बिन्दुविशेषः। पनसाः वृक्षभेदाः, पक्षे बहूनि लपनानि मुखानि। पुरुषाः पुंनागवृक्षाः, महापुरुषः श्रीकृष्णः। तालाङ्कः तालवृक्षचिह्नितः, बलरामश्च। नभः आकाशम्, नभाः श्रावणमासः। घनः निबिडः, मेघश्च। कृष्णागुरुः कालागुरुः, कृष्णा द्रौपदी च। द्रूणां वृक्षाणां पदं स्थानम्, द्रुपदो नाम राजा च। वयांसि पक्षिणः, वयः प्राणिनां कालकृतावस्थाविशेषश्च। गणिका वारस्त्री, यूथिका च। विरोधपक्षे नमेरुधरेण मेरुपर्वतभिन्नेन। सुमनसः देवाः, मालत्यश्च। पुष्पाणि सुमनांसि वा। तलिमं तल्पम्। वरटाः हंसयोषितः। ऊर्मीणां वीचीनां लासः नर्तनम् उल्लोलनमिति यावत्; पक्षे ऊर्मिला जनकपुत्री। आत्मनः आत्मनि वा जम्बालः कर्दमः; पक्षे आत्मजं बालमिति च्छेदः। अनेकशः तरङ्गेति च्छेदः; पक्षे अनेकेषु

शस्तेषु प्रशस्तेषु रङ्गेषु नाट्यभूमिषु । तन्त्र कर्माचरण शास्त्रं वा । वायव्यमित्यादौ देवतार्थे यदादयः । धनंजयहेतिः अग्निज्वाला, अर्जुनास्त्रं च । सुदक्षिणा शोभना दक्षिणा, दिलीपपत्नी च । शस्त्रमिति वेदभागः । सुब्रह्मण्यमिति सामभेदः । स्तोत्रमिति वेदैकदेशः । पक्षे बहुशः तोत्रेति पदे ; तोत्राणि तोदनानि अङ्कुशा इति यावत् । ध्रुवः शङ्कुः, ध्रुवा जुहूर्वा ; पक्षे ध्रुवो नाम तत्सूनुः । सोमः सोमलता चन्द्रश्च । आमुष्यायणाः सत्कुलप्रसूताः । निपातनात्साधुः । अवकीर्णिनः क्षतव्रताः । विलासः विभ्रमः, वबयोरभेदात् बिले आसः स्थितिश्च । राजा नृपतिः, चन्द्रश्च । कृष्णादिपदानि द्रौपद्यादीनामपि वाचकानि । रुक्मिणी स्वर्णयुता च । अनन्तैः शङ्खकुलैः संकुलाभिः । पक्षे अनन्तः शङ्खश्च तन्नामानौ भुजगौ । प्रवालहारिण्यः प्रवालहारसहिताः, प्रवालैर्मनोहरा वा । प्रवालः वीणादण्डो वा । पक्षे प्रवालाः पल्लवाः । गारुडालोकः तदाख्यरत्नप्रकाशः । पक्षे गारुडालोकः गरुडसबन्धि दर्शनम् । हरिणलोचनाः स्त्रियः हरिणानां लोचनानि च । मत्तवारणानि प्रासादवीथीनां वरण्डाः ; पक्षे मत्तवारणाः मत्ता गजाश्च । श्रुतिः वेदः श्रोत्र च । द्विजाः ब्राह्मणाः पक्षिणश्च । वर्णः ब्राह्मणादिः शुक्लादिश्च । जीवनधृतिः प्राणधारण जीवनसंतोषौ वा जीवनधृती । पक्षे जीवनधृतिः जलस्थितिः । अनेकैर्धामभिरलंकृता, अनेकधामाल यथा तथा कृता च, अनेकधा मालकृतेति च्छेदो वा । कण्टकाः क्षुद्रशत्रवश्च । वासशब्दात् वासःशब्दाच्च प्रथमैकवचने संधौ तुल्यं रूपम् । मनुष्यधर्मा धनदः । पुण्यजनाः राक्षसाः । शब्दविद्यापक्षे बहुधातुः अङ्गशोभितेति च्छेदः । 'यस्मात्प्रत्ययविधि-

स्तदादि प्रत्ययेऽङ्गम् '। करभाः उष्ट्राः । हिरण्यक्षयः सुवर्णगृहम् । सन्तः साधवः, नक्षत्राणि च । निगमः वेदः, विपणिश्च । महान् आघोषः शब्दः, पक्षे घोषः आभीरः । भुजङ्गाः विटाः, सर्पाश्च । अहिभयं सर्पभयम्, स्वपक्षप्रभवं भय च ॥

१५. **यत्र चेति** । 'अचतुरविचतुर...' इत्यादिना अक्षिणी च भ्रुवौ चेति विग्रहे अक्षिभ्रुवमिति निपातनम् । अम्बुधरकदम्ब-कादिपदैः केशपाशादयो निगीर्याध्यवसीयन्ते । वक्रिमप्रणयिनीति पाठः ॥

१६. **तस्माच्चेति** । वाहिनी सेना नदी च ॥

१८. **मध्विति** । सुवर्णानि कनकानि, चाम्पेयकुसुमानि च । हन्तुमिच्छा जिघांसा । सर्वां धुरं वहति सर्वधुरीणः । वैजननः सूति-मासः । अखेटा उत्तमा । कौलेयकाः श्वानः । वीतंसाः मृगपक्षिब-न्धनोपकरणानि । उन्माथः कूटयन्त्रम् ॥

२१. **स इति** । पुच्छं उदस्यन्तः परिपुच्छयमानाः । गृष्टयः सकृत्प्रसूता गावः । वातप्रम्यः हरिणभेदाः ॥

२२. **अवनीति** । राजन्यानां समूहो राजन्यकम् । खाङ्गिनः कृपाणधारिणः, मृगविशेषाश्च । सद्यस्तनी तादात्विकी; पक्षे सद्यः स्तनेति च्छेदः । शशपदं नाम नखक्षतविशेषः । अत्तुमिच्छा जिघ-त्सा । रामाः मृगभेदाः, स्त्रियश्च । अवग्रहः गजललाटम्, वर्षाभा-वश्च । अवस्किरमाणान् हर्षेण विक्षिपतः ॥

**२३. स इति ।** तृणबिन्दुर्नाम हरिणरूपधारी कश्चिन्मुनिः । विग्रहः युद्धं शरीरं च । शल्यः शललीमृगः कश्चिद्राजा च । निष्पत्राचकार सपुङ्खस्य शरस्य अपरपार्श्वेन निर्गमनान्निष्पत्रान् चकार । 'सपत्रनिष्पत्रादतिव्यथने' इति डाच्प्रत्ययः ॥

**२४. तस्मिन्निति ।** खेटाखेटकारझाटः पक्षिमृगयुसमूहः । खेटा याप्या इति वा । कापेयं कपिकर्म चापलादिकम् । लङ्घनं उत्प्लुत्योत्प्लुत्य गमनम्, अनशनं च ॥

**२६. अथेति ।** पुरुषतरवः पुंनागवृक्षाः । गाणिक्यं गणिकासमूहः । विटपैः आनमितम्; पक्षे विटपानम् इतम् । बहुलता कृष्णपक्षत्वम् । मकरन्दस्य धानं निधानम्; पक्षे मकर दधानम् । अनेके परागाः; पक्षे अनेकपः गजः ॥

**२८. तत्र स इति ।** शीतं न सहते शीतालुः । पत्राणि पर्णानि, वाहनानि च । जालकानि नूतनकलिकाः, गवाक्षाश्च । नेत्राणि मूलानि, नयनानि च । अम्बरं आकाशं वस्त्रं च । प्रकृष्टैः छदपटलैः पर्णसमूहैः आसितं अध्यासितम्, असितं नीलं वा; पक्षे प्रच्छदपटेन आवरणवस्त्रेण लासितं शोभितम् । सुपर्णः गरुडः । केसरी सिंहः किञ्जल्कवांश्च । महाङ्गः गजः बृहदवयवश्च । शिखी अग्निः अग्रवांश्च । विलासी विटः, वीन् पक्षिणो लासयति यः स च ॥

**इति प्रथम उच्छ्वासः ॥**



# द्वितीय उच्छ्वासः ॥

३९. **अनन्तरमिति** । मालभारिणम् 'इष्टकेषीकामालानां चिततूलभारिषु' इति ह्रस्वः । पितृवन श्मशानम् । संतमसशब्दे 'अवसमन्धेभ्यस्तमसः' इत्यच् ॥

४२. **अत्र पुनरिति** । निस्तलं वर्तुलम् । कृष्णा नीला रुचिः कान्तिः, कृष्णस्य विष्णो रुचिश्च । अरण्यानी महारण्यम् । चारूणि चलानि दलानि येषु तानि काननानि यस्या इत्यरण्यानीपक्षे; कन्यापक्षे चारु यथा तथा चलन्तः अलका यस्मिन् तादृशं आननं यस्या इति विग्रहः । पशुपतिपक्षे वबयोरभेदात् विलसदः बिलवासिनः सर्पाः ॥

४८. **अथ त्रिजगादिति** । नेत्राणि श्लक्ष्णवस्त्राणि ॥

५०. **अथेति** । हरिदर्वा हरिदश्वः सूर्यः । पिचण्डिलाः वृद्धोदराः । विस्रष्टुमिच्छवः विसिसृक्षवः ॥

५४. **तत इति** । रागः अनुरागः, रक्तिमा च । करः किरणः शुण्डा च । करपत्रं क्रकचः ॥

५९. **अथेति** । कलाः षोडश भागाः विद्याश्च । वारुणी मदिरा वरुणसबन्धिनी दिक् च ।

६५. **तदन्विति** । प्रथममञ्जिकापत्रं श्मश्रुरेखेति भाति, पत्रभङ्गविशेषो वा । सर्वाङ्गीण सर्वाङ्गव्यापि ॥

७१. **तच्छ्रुत्वेति** । तुक्खारघट्ट इति दुर्गनाम स्यादिति भाति ॥

**इति द्वितीय उच्छ्वासः ॥**



# तृतीय उच्छ्वासः ॥

---

९२. **अथेति** । खलीनं कविका । नक्षत्रमाला सप्तविंशतिमौक्तिको हारः ॥

९३. **देवेति** । जगनोब्बगण्डेति बिरुदनाम । गूजिघट्टीति कस्यचन दुर्गस्य राज्ञो नगरस्य वा नाम स्यादिति भाति ॥

**तत इति** । अष्टापदेष्टकचितेत्यत्र 'इष्टकेषीकामालानां चिततूलभारिषु' इति ह्रस्वः । निपानं कूपोद्धृताम्बुस्थापनार्थः शिलादिरचितो गर्तः । अन्धवः कूपाः । प्रावृतानि प्राचीराणि । कौतुकागारं प्रतिसरबन्धनाद्युपयोगिगृहं विवाहनिलय इति यावत् । हरणं यौतकम् ॥

१००. **अथेति** । राजहंसाः हंसविशेषाः, नृपतिश्रेष्ठाश्च । भुजङ्गाः विटाः सर्पाश्च । तिलकाः वृक्षविशेषाः, चित्रक च तिलकम् । गणिका यूथिका वारस्त्री च । पत्राणि वाहनानि, पर्णानि च । स्यन्दनाः वृक्षभेदाः, स्यन्दनानि रथाश्च । रामाः स्त्रियः, मृगविशेषाश्च । हरयः अश्वाः, कपयश्च । कञ्चुकिनः सौविदल्लाः,

सर्पाश्च । सवनप्रियाः यागप्रियाः द्विजाः ब्राह्मणाः ; पक्षे वनप्रियाः कोकिलाः तत्सहिताः द्विजाः पक्षिणः । श्रुतिः वेदः श्रोत्रं च । अक्षाः देवनकानि, बिभीतकवृक्षाश्च । खड्गाः असनाश्च वृक्षविशेषाः, शरस्तु तृणभेदः । निषादस्वरः तन्नामा स्वरः, निषादानां किरातानां शब्दश्च । वरणाः वृक्षभेदाः, प्राकाराश्च ॥

१०१. **यस्येति** । दुःशासनः तन्नाम्ना प्रसिद्धः, दुःशासनाः दुष्टाज्ञावन्तो नृपतयश्च । दुःखेन शिष्यन्ते दुःशासना इति वा । शक्तिः बलम्, तन्नामायुधविशेषश्च । अलं कर्मणे अलंकर्मीणः समर्थः । विश्वस्मै जनाय हिता विश्वजनीना । द्वैतमिवेत्यादिवाक्यानि सादृश्यपर्यवसायीनि । विश्वंभरा भूमिः, विश्वंभरो विष्णुश्च । पक्षपातः स्नेहः, पक्षयोर्वीजनं च । सूर्यस्य आलोकः प्रकाशः, सूरीणां विदुषां आलोको दर्शनम् । कोशः मुकुलः, अर्थौघश्च । महावीरः यागीयपात्रविशेषः । अहेयः अपरित्याज्यः, आहेयः अहिसंबन्धी च । भोगः सुखानुभवः, सर्पकायश्च । प्रकृतयः पौरादयः । प्रकृष्टं कृत्यं वा प्रकृत्यम् ; पक्षे प्रकटितः प्रकृष्टः कृत्यायां दुर्गायाम् आदरो येन सः । प्रकृतिः पार्वती वा । यद्वा कृत्तिरिति संधौ तकारद्वित्वेन च्छेदः । कृत्तिः गजचर्म । न अलीकः सत्यभूतः । पक्षे नालीकं पद्मम् । वृषः धर्मः, वृषा इन्द्रश्च । सुनीतिरिति उत्तानपादपत्नीनाम । दानं वितरणं मदजलं च । भुवनं लोकः, जलं च । प्रभा कान्तिः ; पक्षे प्रभासाय तदाख्यतीर्थविशेषाय हितः । काष्ठा उत्कर्षभूमिः, विभूतिः ऐश्वर्यम् ; पक्षे काष्ठानि इन्धनानि, विभूतिः भस्म । मां लक्ष्मीं धाता धारयिता । सुप्रतीको नाम

दिग्गजः । प्रतीकः अवयवः । मदः गर्वश्च । द्युम्नं द्रविणम् । अभीतिः अभितः ईतिर्यस्य, न भीतिर्यस्य स च । नाभिः प्रधानपुरुषः । भुव दारयतीति भूदारो वराहः, भूः दाराः पत्नी यस्य स भूदारो भूपतिः । करः हस्तः, राजग्राह्यो भागश्च । विप्रसात् अकृत ब्राह्मणाधीनां चकार ॥

१०४. **तत इति** । कनखलो नाम गङ्गोत्पत्तिस्थानम् । भुवं नन्दयतीति भूनन्दनः, भूनन्दनः भूमीसुतश्च । भार्गवः शुक्राचार्यः । वृषपर्वा असुराधिपः । वृषः धर्मः, पर्व उत्सवश्च । छाया सूर्यपत्नी कान्तिश्च । राजमण्डल चन्द्रबिम्बम्, राज्ञां राज्यं च ॥

**अव्याजेति** । चापलगुणः चाञ्चल्यगुणः, चपलाया विद्युतः अय चापलः स चासौ गुणश्च । अपवर्जनं दानम् । असन् अविद्यमानः त्रासः त्रासाख्यदोषः यस्य सः । पक्षे असद्भ्यः त्रासः भयं यस्य सः ॥

१०६. **तस्येति** । महान् कुलभूभृत् कुलपर्वतो हिमवान्, महाकुलः भूभृत् राजा च । नालीकं पद्मम्, न अलीकेति पक्षे च्छेदः । अलीकम् अप्रियम् अनृतं वा । सत्पथः नक्षत्रमार्ग आकाशम्, सन्मार्गश्च । सर्वाणि मङ्गलानि । पक्षे सर्वमङ्गला पार्वती । कृष्णादीनि नदीनामानि च । कर्णिका कर्णालंकारः । माला अस्या अस्तीति मालिनी । नर्माणि ददातीति नर्मदा । सत्यादीनि तत्तत्स्त्रीनामानि । सत्या यथार्थभाषणशीला । एवमुत्तरत्रापि प्रकृतार्थोऽनुसधेयः ॥

१०७. **चन्द्र इवेति** । काण्डपटी यवनिका । कर्दमेन रक्ताः

कार्दमिक्यः । कशादेश्याः कशातुल्याः । विप्रश्निका ईक्षणिका । भीमरथी मरणपूर्वरात्रिः । क्षत्रियाणि क्षत्रियवशजाता । प्रव्रज्या संन्यासः । सुष्ठु ऐरंमदं वैद्युतं विलासम् । पक्षे स्वैर मदविलासमिति च्छेदः । नवानां नीपककुसुमानां हर्षदा; पक्षे वनीपकाः याचकाः । स्वरुः वज्रम्; पक्षे स्वः उपरि गता इति च्छेदः । अर्जुनः ककुभवृक्षः, शिलीमुखाः भ्रमराः; अर्जुनः मध्यमपाण्डवः, शिलीमुखाः बाणाः ॥

१०८. **सेति** । सीता जानकी लाङ्गलपद्धतिश्च । कबन्ध जलम्, दनुकबन्धं च । घनः निविडः मेघश्च । वेणिः एकीकृतः केशपाशः, प्रवाहश्च । धार्तराष्ट्राः हंसभेदाः, धृतराष्ट्रापत्यानि च । जिष्णुः इन्द्रः, जयशीलश्च । कालिका मेघपङ्क्तिः । नीलकण्ठः मयूरः शिवश्च । पयांसि जलानि क्षीराणि च ॥

१०९. **क्रमेणेति** । कर्मान्तसदनं कार्यकरणगृहम् । भिदुर वज्रम् । आभीलं कष्टम् । गोमिनः गोस्वामिनः । धैनुकं धेनुसमूहः । कर्मान्तिकः कर्मकरः । तृण्या तृणसमूहः ॥

११४. **अथेति** । कुटहारिकाः घटीचेट्यः ॥

११६. **तत इति** । सुमनसः देवाः विद्वांसश्च । महावीराः महान्तो वीराः । महावीरः यागीयपात्रविशेषश्च । पद्मानि तामरसानि, पद्मा लक्ष्मीश्च ॥

**ताभ्यां चेति** । चतुर्विधान्यायुधानि— हस्तमुक्तयन्त्रमुक्तप्रहरणक्षेपणीयानि ॥

११८. **पृथ्वीति।** कालानलसंतापितेनेत्येव क्रमेण कृतान्ताय-स्कारेण कृतेनेवेत्यर्थः। पश्यदलिकः फाललोचनः शिव इत्यर्थः। मौलिषु किरीटेषु शिखरेषु च। पादं चरणं किरण च। भद्रासनं सिंहासनम्। हिरण्यदान स्वर्णवितरणं हिरण्यकशिपुविदारणं च। जीवनं जीविका जलं च। कन्या राशिश्च। ज्येष्ठा नक्षत्रं च। स्पर्श-नं दानं त्वगिन्द्रियग्राह्यो गुणश्च। वसु धनं वसुः रश्मिश्च। खरः क्रूरः तन्नामकश्च। कलितं क्षमा क्षान्तिरेव आभरणं यस्य सः। क्षमाभरण भूधारणं च। कर्णः अङ्गाधिपः, कर्णौ श्रवणे च। सतां चक्र समूहं नन्दयतीति तथा। पक्षे चक्र प्रसिद्धम्, नन्दक इति तदीयखड्गस्य नाम। प्रत्ययः विश्वासः। पक्षे गुणः वृद्धिः प्रत्यय इति शब्दशास्त्रप्रसिद्धाः संकेताः। हिमस्य हेम्नश्चायं हैमः। बहुधा रणोचित इति राजपक्षे; पक्षे बह्वी धारणा॥

११९. **यस्येति।** वर्णः शुक्लादिः ब्राह्मणादिश्च। अहिभयादि-पदानि पूर्वं व्याख्यातान्येव। परदर्शनं शत्रुदर्शन परमात्मदर्शनं च। दोषाः गुणविपरीताः, दोषा रात्रिश्च। रौरवेति कस्यचिन्नरकस्य नाम; पक्षे रुरूणां मृगाणामिमानि रौरवाणि। विपक्षः शत्रुः; वीनां पक्षिणां पक्षाश्च विपक्षाः। आत्तगन्धः अभिभूतः स्वीकृतप-रिमलश्च। द्विजाः गुरवश्च। पक्षे द्विजाना पक्षिणां गुरुः श्रेष्ठः गरुड इत्यर्थः। कुसुमेषुभ्रान्तिः मन्मथभ्रमः; पक्षे कुसुमेषु भ्रान्तिरिति च्छेदः॥

**तस्य चेति।** 'रिपुयुवतिकपोलस्थलीमरकतताटङ्कप्रभानिशाशा-न्तिनिदाघतपनः' इति पाठः। पुद्गलः देहः, अवयव इति यावत्।

प्रष्ठः अग्रगामी । सांयुगीनाः संयुगे साधवः । स्थूललक्षाः बहुप्रदाः । विपणिः पण्यवीथिका । तरणिः सूर्यः । सृणिः अङ्कुशः ॥

१२०. **यस्येति** । अङ्गना स्त्री सार्वभौमाख्यदिग्गजवधूः काचन करिणी च । मदः गर्वः मदजलं च । परमेश्वरः शिवः, उत्कृष्टोऽधिपतिश्च । वृषः वृषभः धर्मश्च । अरिचक्र अरविशिष्टं चक्रायुध शत्रुराज्यं च । वृषः वृषासुरः धर्मश्च ॥

१२१. **तस्मिंश्चेति** । पत्राणि रथाश्च । पक्षे पत्ररथाः पक्षिणः । पुष्पं कुसुमं आर्तवं च ॥

**स्फटिकेति** । घनः मेघः निबिडश्च । हंसैः हंसवच्च धवलं हंसधवलम् । अम्बरं आकाशम्, वस्त्रं च । राशिदेशीयानि राशिसदृशानि । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' । अभ्रमुपतिः ऐरावतः । रुचिः दीप्तिः प्रीतिश्च । पयोधरः कुचः, मेघश्च ॥

१२२. **तस्मिन्निति** । संवर्तिका नवदलम् । उक्षाणः वृषभाः । बाह्याली अलिन्दादिः ॥

१२३. **अथेति** । रीढा अवमानना । आदिमघोणी श्रीवराहावतारो विष्णुः । शस्त्रैश्च शस्त्रैश्च प्रहृत्येदं युद्ध प्रवृत्तं शस्त्राशस्त्रि । कासरासुरः महिषासुरः । निकृतौ तिरस्कारे कृति समर्थम् । कृन्मुखेनेति क्वचित्पाठः । उदहायत उद्गतम् । जिहीतेः भावे लङ् ॥

१२४. **तदेति** । चण्डातकम् अर्धोरुकम् । पद्मानि वयोवस्थाव्यञ्जका बिन्दुविशेषाः । छायापथः ग्रहाणां संचारमार्गः । अवग्रहः गजललाटम्, वर्षप्रतिबन्धश्च । करकः शुण्डा । स्वार्थे कः । पक्षे

करकाः जलकुम्भाः । कान्ताराणि दुर्गमवर्त्मानि, अगाः पर्वताः; पक्षे कान्तायाः सूत्रधारस्त्रियः नट्याः रागः श्रीरागादिः कान्ता-रागः । वारिः गजबन्धनम्, जलं च वारि । कूर्मः कच्छपः भूभृच्चक्र राजमण्डलं पर्वतसमूहश्च । पृथुः स्थूलः केचिच्चक्रवर्ती च । दानवारि मदजलम् । दानवाः असुराः अरयः शत्रवश्च । वृद्धे प्रवृद्धे श्रवसी श्रोत्रे यस्य त वृद्धश्रवसम्; पक्षे वृद्धश्रवा इन्द्रः । पद्मस्फुरणं तामरसविकासः, वयोऽवस्थासूचकबिन्दुविशेषप्रकाशश्च । कानने अधिकाननम्, अधिकं यथा तथा आननेन शोभत इति तम् अधिकाननशोभितम् । महाकुञ्जरं महागजम्; यूथपतिं च । सुदर्शनं चक्रायुधम् । शङ्खः ललाटास्थि कम्बुश्च । दर्पेण कान्तः, दर्पकस्य मन्मथस्य अन्तः नाशश्च । विदुः गजकुम्भमध्यम्, विदुरो नाम शूद्रपुत्रो पाण्डोरनुजः । नाना आहवाः युद्धानि, हवाः यज्ञाः । शस्त्र आयुधविशेषः, वेदभागश्च । शुण्डा गजहस्तः, सुरा च । सन् आरक्षः हस्तिपकः । सदा रक्षा पालनं च ॥

१२७. तत इति । भिदेलिमं स्वय भिन्नम् । प्रासः कुन्तः आयुध येषां ते प्रासिकाः । नासीरं सेनाव्यूहाग्रभूमिः । पृथुलाः हरयः अश्वाः; पक्षे पृथवः लहरयः तरङ्गाः प्रवाहा वा । प्रासाः कुन्ताः; पक्षे शतप्रासाः करवीराख्यवृक्षविशेषाः । पाञ्चजन्यं पुमांसः, स्वार्थे ष्यञ्; पक्षे पाञ्चजन्य मुरारेः शङ्खः । स्वेषां पताकाया अन्तः; पक्षे स्वपता कान्तेनेति च्छेदः । अनूपं जलप्रायदेशः । तृणताः धनूंषि; पक्षे बहुतृणस्य भावो बहुतृणता ॥

१२९. अलब्धिविति । हरिकुलं अश्वसमूहः, भेककुलं च । धूली-

कदम्बकं परागपटलम्, धूलीकदम्बका नाम वृक्षाश्च। मातङ्गः गजः, चण्डालश्च। कदलिका पताका रम्भा च। इत्वरी स्वैरिणी। अम्बर आकाशं वस्त्र च। स्पर्शनः वायुः; पक्षे स्पर्शने नयुक्तेति च्छेदः। रुचिभर्ता सूर्यः, जारश्च। कृष्णा श्यामवर्णा द्रौपदी च। दुःशासनाः दुर्मदा राजानः, दुःशासनो नाम दुर्योधनानुजश्च। भीमा सेना तदाक्रमणम्, भीमसेनश्च धर्मपुत्रानुजः। अचलः स्थिरः, पर्वतश्च। गौरी पिशङ्गवर्णा, पार्वती च। महती सेना महासेना, स्कन्दश्च महासेनः। दिशः अम्बरं च दिगम्बराणि, दिगम्बरो हरश्च। रोहिणी तद्वर्णा, वसुदेवपत्नी च। नीलं अम्बर आकाशम्, नीलाम्बरो बलरामश्च। चक्रीवन्तः गर्दभाः॥

१३०. **एवमिति**। प्रथम पञ्चम च भूतं पृथिवी आकाश च। रेणव एव रेणुकाः तासां जन्मना उत्पत्त्या; पक्षे रेणुकाजन्मा क्षत्रियान्तकरः परशुरामः। पदातीनां समूहाः पादातानि। पर्व पौर्णमासी उत्सवकालश्च। राजा चन्द्रः नृपतिश्च। सन्तः नक्षत्राणि साधवश्च। धनाधिपत्य कुबेरत्व द्रव्याधीशत्वं च। सनिधिः सामीप्यम्, सन् निधिश्च। सार्वभौमः दिग्गजविशेषः, चक्रवर्ती च। दानं वितरणम्, मदश्च। जाड्यं मूढत्वम् शैत्य च। वात्यामरुतः चक्रवाताः। रजः रजोगुणः, धूली च। कञ्चुकिनः सौविदल्लाः सर्पाश्च। गौः धेनुः भूमिश्च। वृषः वृषभः धर्मश्च। द्विजाः ब्राह्मणाः, पक्षिणश्च। रौरवपदं रौरवाख्यनरकस्थानम्। रुरूणामिदं च रौरवम्, पदं चरणन्यासः। स्तम्भः गर्वनिश्चेष्टत्वम्, स्थूणा च। करः राजग्राह्यो भागः, शुण्डा च॥

**इति तृतीय उच्छ्वासः॥**

# चतुर्थ उच्छ्वासः ॥



१३३. **अनन्तरमिति** । संस्तवः परिचयः । भूतपूर्वं गोष्ठं गौ-ष्ठीनम् । सिन्धुजाः नदीजाताः, अश्वाश्च । मन्दुरा वाजिशाला । तिमयः शकुलाश्च मत्स्यविशेषाः ; पक्षे तिमिशाः वृक्षविशेषाः । वनं जलम्, कानन च । परण्डः वरण्डकः । चक्रं चक्रायुध समूहश्च । कृष्णः वासुदेवः, नीलश्च । वाहिनी सेना, नदी च । पृथुलोमानः झषा, पृथूनि लोमानि रोमाणि । महाक्रोडः महावराहः, महान् क्रोडः मध्य-भागः यस्य स च । सोमग्रहः सोमरसग्रहणम्, चन्द्राख्यो ग्रहविशे-षश्च । सवन यागम् वनसहित च । शठा शाठ्यवती कद्रूः सर्पमाता ; पक्षे शठकद्रुः शठकाख्यवृक्षविशेषः । मणीनां रत्नानां तरणं उपरि-प्लवनम् ; पक्षे मणितं रतिकूजितम् । अहयश्च मकराश्च ; पक्षे अहि-मकरः सूर्यः । पोताः प्लवाः ; पक्षे कपोताः । भीमः भयंकरः, भी-मसेनश्च । ऊरुः महान् भङ्गः तरङ्गः ; पक्षे ऊरुभङ्गाः सक्थिविदल-नम् । सिन्धुः नदी, तदाख्यो देशश्च सिन्धवः । चन्द्रभागा तन्नाम्नी नदी ; पक्षे चन्द्रभागः चन्द्रकला । सदानीरा करतोयानदी; पक्षे सदा नीरं समुद्रजलं आश्रितम् । मैनाकः पक्षरक्षणाय सदा समुद्रे वसति । ऊर्मय एव ऊर्मिकाः, अङ्गुलीयानि च । वलयं समूहः, कङ्कणं च । सुरवाहिनी गङ्गा, देवसेना च । भ्रमः आवर्तः, भ्रा-न्तिश्च । व्यूहः समूहः, सेनासंनिवेशविशेषश्च ॥

१३६. **ततस्त्विति** । जन्यं युद्धम् । मण्डलाग्रः खड्गः ; पक्षे

भास्वन्मण्डलं सूर्यबिम्बम् । क्ष्वेला सिंहनादः, क्ष्वेलो विषं च । पत्त्राणां वाहनानां पादपरागः चरणधूलिः ; पक्षे पत्त्रं दलम्, पादपाः वृक्षाः, रागः रक्तिमा ॥

**१३८. मानेति** । आयुधिकाः आयुधजीविनः । वालाः कुन्तलाः । शाताः तीक्ष्णाः । फेरवाणां जम्बुकानामिदं फैरवम् । जानुद्वयस जानुप्रमाणम् । द्वयसच्प्रत्ययः । अश्वीयं अश्वानां समूहः ॥

**मथनेति** । तितिक्षाकर्मठः क्षमासमर्थः । आर्तिः पीडा धनुष्कोटिश्च । आशुगः बाणः ॥

**१३९. तत इति** । शराः बाणाः, वीरुद्विशेषाश्च । पुण्यजनाः सुकृतिनो जनाः, यक्षाश्च । शकुनयः पक्षिणः, शकुनिर्नाम दुर्योधनस्य मातुलः । धनुः चापः, तन्नामकराशिश्च । रसातलं पातालम्, भूतलं च ॥

**१४२. तत इति** । कवोष्णः ईषदुष्णः । हसन्तिका अग्निशकटी । आजानेयाः कुलीनाः ॥

**१४६. यत्रेति** । शिखण्डः बर्हम्, शिरोभूषण च । चन्द्रः हिमकरः, मेचकश्च ॥

**१४७. तत्र चेति** । सम्यक् तमः संतमसम् । षण्णां मातॄणामपत्यं पुमान् षाण्मातुरः सुब्रह्मण्यः । एकाम्रस्य च्छाया एकाम्रच्छायम् । ‘ विभाषा सेनासुराच्छाया— ’ इति नपुंसकत्वम् ॥

**१४९. तत्रेति** । अरातिः शत्रुः । चक्रं समूहः । वाहाः अश्वाः ;

पक्षे अराणि अतति प्राप्नोतीति अराति तादृश चक्रं चक्रायुधं वहतीति तादृशः । वनमाला वैजयन्ती, काननसमूहश्च । पृथुलया गदया भासितम्; पक्षे पृथु यथा तथा लगन्त्या आभया सितं शुभ्रम् । धाम कान्तिः; पक्षे बहुधा मोपशोभितमिति च्छेदः, मा लक्ष्मीः । सुदर्शनरुचिः चक्रायुधकान्तिः; पक्षे न वसुदर्शने धनविलोकने रुचिः प्रीतिर्यस्य तम् ॥

१५०. **तत इति** । हस्तिपतिः प्रमाणं यस्यास्तां हस्तिपतिद्वयसीम् । प्रमाणे द्वयसच्प्रत्ययः । महीभृतां पत्युः राजश्रेष्ठस्य पर्वतराजस्य च । कटकः वलयम्, अद्रिनितम्बश्च । पादः चरणम्, प्रत्यन्तपर्वतश्च ॥

१५१. **वालिभिरिति** । कूटपाकलः गजज्वरः । पार्ष्णिदघ्नं पार्ष्णिप्रमाणम् । प्रमाणे दघ्नच्प्रत्ययः । रुक्म सुवर्णम् । रावणसंधानादिकथा हालास्यमाहात्म्ये द्रष्टव्या ॥

१५२. **अनन्तरमिति** । डिण्डीरः फेनः । अति अधिकः रोहितानां मत्स्यविशेषाणा प्रचारो यस्या ताम्; पक्षे अतिरोहितः अच्छन्नः प्रकटः प्रचारः यस्यास्ताम् । कर्णः श्रोत्रम्, राधेयश्च । शकुनिः पक्षे सौबलश्च ॥

१५४. **तदन्विति** । कल्यं समर्थम् । खिङ्किराः जम्बुकाः । रथ्या प्रतोली ॥

**अनन्तरमिति** । पुष्करं आकाशम्, पद्मं च । भृगुः प्रपातः; पक्षे गुरुः बृहस्पतिः, भृगुः शुक्रः । पादः प्रत्यन्तपर्वतः, चरणं च ।

अनन्तासिन्धुः अमरनदी गङ्गा ; पक्षे अनन्ताः अनेकाः सिन्धवः नद्यः ॥

१५७. **अनन्तरमिति** । अभ्यागारिकः कुडुम्बव्यापृतः ॥

**चकार चेति** । अव्राक्षीत् चिच्छेद । 'ओ व्रश्चू छेदने' लुङ् । नीवृत् जनपदः ॥

**तदान्विति** । घोटकाः अश्वाः । सिन्धुराजः सिन्धुदेशराजः सनुद्रश्च । श्रीः संपत्, लक्ष्मीश्च ॥

१५९. **तत इति** । मृणालानीव भङ्क्त्वा मृणालभञ्जम् । रम्भास्तम्भलावमित्यत्राप्येवमेव ॥

**तत्रान्तर इति** । उदन्या पिपासा । वात्या वातसमूहः ॥

१६०. **क्रमेण चेति** । श्वावित् शल्यमृगः । सर्वपथीना सर्वे पन्थानं व्याप्नुवती । बुभुक्षा भोक्तुमिच्छा । पृषदश्वः वायुः ॥

१६५. **वनेति** । अशोकं शोकरहितम्, अशोकश्च वृक्षः । पाटलः रक्तः, तन्नामा वृक्षश्च । तुङ्गं उन्नतम्, तुङ्गः पुन्नागवृक्षश्च । कृता माला यस्मिन् स कृतमालः ; कृतमालो वृक्षश्च । मदनं मदजनकम्, मदनः वृक्षभेदः । अर्जुनः धवलः, ककुभवृक्षश्च । भद्रा श्रीः यस्य तेन ; भद्रश्रीः चन्दनवृक्षः । सरलः सरसः, सर्जकवृक्षश्च ॥

१७४. **अनन्तरमभङ्गुरेति** । औपनीविकः नीवीसमीपे प्रायभवः । 'उपजानु—' इति ठक् । आच्छुरितकं नखक्षतविशेषः ।

सद्यः स्तनेति च्छेदः । खण्डाभ्र नखक्षतविशेषः; पक्षे सद्यः भवं सद्यस्तनम्, अभ्र मेघः । अर्धचन्द्रो नाम नखक्षतभेदः । चटकविलसितमिति आलिङ्गनविशेषस्य संज्ञा ॥

१७७. **अत्रान्तर इति** । रन्तुमिच्छुः रिरसुः । आशा दिक्, अभिलाषश्च । प्राचेतसी वरुणसंबन्धिनी, महाशयसंबन्धिनी च । नूपुररवानुरणनमिवेति सरसः पाठः । जालपादः हंसः । आलोकः प्रकाशः, दर्शनं च । सितरुक् चन्द्रः, धवलकान्तिसहितं च । तिमिरं अन्धकारं चक्षुषो रोगभेदश्च । अपदोष दोषरहितम्; दोषाविरहितं च, दोषा रात्रिः । अब्जकान्त सूर्यम्, पद्मवत्सुन्दरं च । जलजधृतिः पद्मसंतोषः, शङ्खधारणं च । चक्रं समूहः, चक्रायुधं च । पुरातनी देवता श्रीमान्नारायणः । पद्मिनी कमलिनी, तज्जातिस्त्री च । रजः धूलिः, आर्तवं च । अम्बरं आकाशम्, वस्त्रं च । करः किरणः, हस्तश्च । वरुणालयः समुद्रः । हरयः अश्वाः, कपयश्च । झाटः संघः । सूर्यकिरणाना सायमग्निप्रवेशः श्रुत्यादिसिद्धः ॥

१७९. **अथेति** । विच्छुरणं स्पर्शः । खर्जूः कण्डूतिः । गल्लः कपोलः, देश्यमिदं पदमित्यभियुक्ताः । गोधाया अपत्यं पुमान् गौधेयः । तिम्यन्ती आर्द्रीभवन्ती । यातयामानि गतरसानि तदितराणि प्रत्यग्रविकसितानीत्यर्थः । पृथवः लकुचाः जम्बीरवृक्षाः, पृथुलौ कुचौ च । पत्रावली पर्णसमूहः मकरिकादिपत्रभङ्गश्च । पल्लवाः विटाः, किसलयानि च । षट्ग्रन्थाः वृक्षविशेषाः, षट्दर्शनानि च । विपत् पक्षिचरणम्, आपच्च । चलदलः पिप्पलवृक्षः;

पक्षे चलन्तः अलकाः यस्मिंस्तादृश आननं यस्यास्ताम् । करवीर-पुरुषौ वृक्षविशेषौ ; पक्षे पृथुलकरः महाबाहुः वीरपुरुषः शूरः अर्जुनः । प्रसवः पुष्पम्, प्रसूतिश्च । कपोतानां पालिकायाः पङ्क्तेः पातः आगमनम्, कपोतपालिकायाः विटङ्कस्य पातः पतनं च । गिरयः काननानि विवराणि च ; पक्षे गिरिकाः बालमूषिकाः तासां आननैः कृतानि विवराणि छिद्राणि । रूपाः हरिणाः, रूपं आकारश्च । तालः तालवृक्षः कालक्रियामानं च । सवनं यागः, वनप्रियः कोकिलः । गायत्री खदिरवृक्षः, जपा ओड्रपुष्पम् ; पक्षे गायत्रीजपः प्रसिद्धः । स्नुहितरुः स्नुहीवृक्षः । श्रीफलः बिल्व-वृक्षः ॥

१८२. **तत्रेति** । परिवहपवनः षष्ठस्कन्धस्थितवायुः । विघ्नस्वामी विघ्नेश्वरो हेरम्बः । पञ्चमी नाम देवताविशेषः । अट्टालः प्राकारादुप-रितनमुन्नतस्थानम् । प्रच्छन्नम् अन्तर्द्वारम् । बलिभूमेः बल्यर्थस्थानस्य निग्रहः सीमा ; पक्षे बलिचक्रवर्तिराज्यस्य निग्रहः निराकरणम् ॥

१८५. **अन्तरिति** । आप्रपदीना पादस्याग्रं मर्यादीकृत्य व्याप्नु-वती । परेयुषां प्रमीतानाम् ॥

१९१. **तत इति** । कुहली पूगपुष्पिका । शृङ्गारः आदिमो रसः, गजमण्डन च । तापसहिता तापसेभ्यो हिता, तापेन सहिता च ॥

१९३. **तस्मिन्समय इति** । निर्वेशः अनुभवः । रङ्गवल्ली भूतलेषु तण्डुलचूर्णादिभिर्भक्तिरचना । कश्यं मद्यम् । गाङ्गेयं

स्वर्णम् । भुजङ्गाः विटाः, सर्पाश्च । मधुपाः भृङ्गाः, मद्यपायिनश्च । भोगः सुखानुभवः, सर्पकायश्च । धनदाः धनदातारः, कुबेरश्च धनदः । गवाक्षः वातायनानि, गवाक्षो नाम कश्चिद्वानरश्च । भूतिः ऐश्वर्यम्, भस्म च । अम्बरं वस्त्रम्, मणयः रत्नानि वसूनि धनानि च । पक्षे अम्बरमणिः सूर्यः, वसवः अष्टौ वसवः ।

१९६. **अस्यामिति** । व्यसनिनी आसक्ता । प्रपा पानीयशाला । अलमल्लकं कौपीनम् । स्रग्धरा माल्यधारिणी । स्रग्धरादयश्च वृत्तविशेषाः । भूतिः ऐश्वर्यम्, भस्म च । रुचिभर्ता हृदयप्रियो भर्ता सूर्यश्च । वसु धनं वसुः किरणश्च । तामसं तमोगुणसंबन्धिनम्, अन्धकारसंबन्धिन च । भावः आशयः, पदार्थश्च । प्रकृष्टं द्युम्नं द्रविणं येषां ते प्रद्युम्नाः, प्रद्युम्नः मन्मथश्च । भुजङ्गाः विटाः । भुजङ्गभोगः आदिशेषफणा च । मणितरणं रत्नानामुपरिप्लवनं रतिकूजितसहितयुद्धं च । पुरुषे पुरुषे प्रतिपुरुषं रुचिः प्रीतिः ; पक्षे प्रतिपुरुषः प्रतिबिम्बम्, रुचिः कान्तिः । रक्तान् रक्तं च आकर्षतीति रक्ताकर्षिणी । चित्राणि विचित्राणि कूटानि मायाः तैः सहिता ; पक्षे चित्रकूटो नाम कश्चन पर्वतः । मयूरपदं शशप्लुत च नखक्षतविशेषौ । खण्डाभ्रं नाम नखक्षतविशेषः, खण्डभूतो मेघश्च । खण्डाभ्र दन्तक्षतविशेष इति केचित् । प्रकृष्टः वालः कुन्तलः प्रवालः । करिकरः नखक्षतविशेष इति केचित् । अनुभूता करिका नखक्षतविशेषः यया सा अनुभूतकरिका । रक्षसः भेव भा दीप्तिः क्रौर्यमिति यावत् यस्याः सा रक्षोभा अनुभूतकरिका च सा रक्षोभा चेति क-

र्मधारय इति परे ; पक्षे करिकरक्षोभः गजशुण्डाविलोलनम् । प्रतारणं वञ्चनं प्रकर्षेण तारणं कूलान्तरनयन च । बिन्दुः दन्तक्षतविशेषः, वयोवस्थासूचको बिन्दुश्च । निष्कमूल्येषु पटेषु लालसा । श्यामा यौवनमध्यस्था, रात्रिश्च । वसुमान् सूर्यः, धनिकश्च । रुचिरा मनोहरा, तन्नामा वृत्तविशेषश्च । इन्द्राणी इन्द्रस्य पत्नी, आलिङ्गनभेदश्च । नवः आसवः मद्यम् । विरोधपक्षे न वासवासक्तेति च्छेदः ॥

२०१. **कुपितेति** । वृत्तानि वर्तुलानि, वृत्त आचरण च ॥

**यस्या इति** । चन्द्रः स्वर्ण हिमकरश्च ॥

२०२. **यस्या इति** । लटहा मनोज्ञा समर्थेत्यर्थः । निर्माल्यं भुक्तोज्झित माल्यम् । शैलूषी नटी । सताम् अरसेति च्छेदः ; पक्षे सह तामरसैर्वर्तत इति तादृशी ॥

२०५. **तदन्विति** । कर्करी वस्त्रनिर्णेजनाय उपयुज्यमाना स्वल्पवारिधानिका । कादम्बिनी मेघमाला, कादम्बाः कलहंसाः तद्वती च । शिवा मङ्गलकरी, पार्वती च । वयः प्राणिनां कालकृतावस्थाविशेषः, वयांसि पक्षिणश्च । शैवलेन जलनील्या असिता नीला ; पक्षे शैवैः शिवभक्तैर्लासिता । धार्तराष्ट्राः हंसविशेषाः, धृतराष्ट्रापत्यानि च सिन्धुराजः । नदीपतिः समुद्रः ; पक्षे सिन्धुराणां गजाना आजः क्षेपणम् ॥

२०७. **अनन्तरमिति** । पञ्चधाराः आस्कन्दितम् , धौरितकम् ; रेचितम् , वल्गितम् , प्लुतम् । सदा खुरेण चिता गतिर्यस्य तम् ; पक्षे सदा आखुना मूषकेण रचिता गतिर्यस्य तम् । मुखरः

शब्दायमानः कविकायाः खलीनस्य अन्तः यस्य तम् । पक्षे मुखरैः कविभिः कान्तम् । जन्य युद्धम्, पक्षे जनिः जन्म तस्यै अहितम् । भस्मवत् भस्मना च धवलो विग्रहो यस्य तम् । देवमणिः आवर्तविशेषः, कौस्तुभश्च । धारा सलिलधारा, अश्वगतिपञ्चकं च । पर्याणं अश्वपल्ययनम् ॥

२०९. **तत इति** । अनुभावः महिमा । छाया अनातपः, कान्तिश्च ॥

२१० **प्रतिकवीति** । बाणमयूरसुबन्धुशब्दाः तत्तन्नामप्रसिद्ध-कविवाचकाश्च । अर्थान्तरं तु सुगमम् ॥

**जयतीति** । कविमात्मानं मन्यत इति कविंमन्यः । खद्योतः सूर्यः, ज्योतिरिङ्गणः । कीटमणिः खद्योतः ॥

**सुगुणेति** । स्वमेव स्वयं वक्तीति भाति ॥

**गाथा इति** । तथागताः सौगताः । सत्रा सह । भूम्नां महिम्नाम् । कद्वदाः गर्ह्यवादिनः । 'रथवदयोश्च' इति कोः कदादेशः ।

**इति चतुर्थ उच्छ्वासः ।**

